वि·टं· चरंतितेनयागोचरेशुभस्थानस्थितेऽपि अयंभावः चंद्रेक्षीणत्वादिनाबलहीनेसति अन्यग्रहाणांगोचरबललाभेसत्यपिवरस्योत्तर अ·
टी· कालीनंसर्वंशुभफलंनश्यतीत्यस्मिनशौनकादयोजगुः उक्तंचतैः नकुर्वीतास्तगेचंद्रेदुःस्थितेजन्मराशितः क्रूरग्रहयुतेनष्टे[illegible] ६
३४ लान्यखिलान्यपीति ४ इत्याद्यनिष्टप्रसंगेनतन्मतंदूषयति नृणांएवमादिफलवादिनः एवमादीनिफलानिपुरुषाणांइ[illegible]
तिनसकंचंद्रबलंकथंनेच्छंतीतितेषामनिष्टं अतस्तेऽपिवरस्यचंद्रबलंस्वीकर्त्तव्यमित्यर्थः यदुक्तंतैः पुंसांरविबलंग्राह्यमितित
त्स्वीकरोति भानुरपीतियेषांमतंयन्मतं यन्मते उक्तयः यन्मतोक्तयः तासुयन्मतवचनेषु नृजन्मतः नरस्यजन्मराशेः सका
शात्भानुरुपचये भाव्यइत्यध्याहारः गोचरेहिभानुरुपचयस्थानएवशस्तः तन्नोस्माकमपिइष्टंसंमतमेव तथाचतद्वाक्यं

एवमादिफलवादिनोनृणामैंदवंबलमुशंतिकिंनते भानुरप्युपचयेनृजन्मतोयन्मतोक्तिषुतदिष्टमेवनः ५

योनिःस्त्रीणांशिशिरकिरणश्चित्रभानुश्चपुंसांइत्यादि अत्रयदुक्तंस्त्रीणामेवचंद्रबलंतन्निराकृतंयदुक्तंरविबलमितितदस्मा
कमपीष्टमितिभावः अतोवरस्यवध्वाअपिगोचरेण चंद्रबलंचग्राह्यमितिसिद्धं वरस्यतिच योषितांगुरुयतंगगोचरइत्या राम·
दि ५ एवमनिष्टप्रसंगेनतन्मतंनिरस्यपुनरप्यन्तरेणापिपुनर्दूषयति त्रिवर्गपतिनानरेणशशिबलंनसमाप्यतेकन्ययाच ३४
त्वासमाप्यतेलभ्यते त्रिवर्गपतिनेति हेतुगर्भं धर्मार्थकामानांस्वामिनापुरुषेणकन्याद्वारायदिचंद्रबलंप्राप्यतेतर्हिद्व
हविवाहसमयेयत् गोमहीमहिष्यादिदीयते नहिंतद्बलेनेषांगोमहीमहीष्यादीनांयच्चंद्रबलंतत्तस्यवरस्यदिशादेहि[illegible]

धेनुः मही क्षेत्रवाटिकादिमहिषीप्रसिद्धा आदिशब्देनदासीदासशय्यादीनांग्रहणंयदिपात्रमात्रमितिहेतोःकन्यायायच्चंद्र
बलंतदेववरस्यतर्हिगवादिकंयद्दीयतेनेनतस्यापियच्चंद्रबलंतद्देयंवरस्यभवेदित्यतिप्रसंगः यद्वाऽयमन्वयः चेत्त्रिवर्गपति
नानरेणशशिबलंनसमाप्यतेनेनप्राप्यतेयदिकन्ययासमाप्यतेतर्हिइहविवाहेयज्ञवादिकंदीयतेनेतस्यवादेस्तद्बलं नतुचंद्रस्य
बलंदिशेत्यतिप्रसंगः ६ पञ्चपरमतेयोनिःस्त्रीणांशिशिरकिरणइत्यादितदनद्दूषयति इंदुश्चंद्रमाः इंदुवदिंदुवदनानुगंबल
लंयच्छतिददातिइंदुरिववदनंयस्याःसाइंदुवदनानां अनुगच्छतीति इंदुवदनानुगं अंगनानुसारंयत इंदुःयुवतिग्रहः

नत्रिवर्गपतिनानरेणचेत्कन्ययाशशिबलंसमाप्यते दीयतेयदिहगोमहीमहिष्यादितर्हिदिशतस्य
तद्बलम् ६ इंदुरिंदुवदनानुगंबलंयच्छतीहयुवतिग्रहोयतः तन्नृणामपिकथंषडष्टगः खंडयत्ययमसू।

स्त्रीग्रहः तस्मात्तद्बलंस्त्रीणामेवनतुनराणामितिचेत्तर्हि अयंचंद्रमाःप्रसूतिषुजन्मकालेषुषडष्टमः (न्प्रसूतिषु ७॥
सन्नृणांपुरुषाणामपि असून्प्राणान्कथंखंडयति अयमर्थः चंद्रमास्त्रीग्रहइतिकृत्वाविवाहेस्त्रीणामेवचंद्रबलंग्राह्यं
तर्हितेनैवहेतुनाजन्मकालेषष्ठाष्टगेनचंद्रेणनृणामरिष्टंनकार्यंतच्चतेषामप्यस्ति अतोवरस्यापिचंद्रबलंग्राह्यमि
तिसिद्धं ७ एवंनकेवलंपुरुषफलेजातकेनचंद्रःस्वीकृतः किंत्वन्येष्वपीत्याह होरयाजातकेनहिमरश्मिरादृतःस्वी
कृतःकेषुसुनफानफादिष्वपिपुंस्फलेषुयोगेषुपुंसांफलयेषांतेनतथारविवर्जंद्वादशगैरनफाचंद्राद्द्वितीयगैःसुनफा

इत्यादिषु चंद्रयोगेषु अन्येष्वपि चंद्रकृतेषु राजयोगादिष्वपि जातके न पुरुषफले चंद्रः स्वीकृत इत्यर्थः अतो वरस्यापि चंद्र
बलं विलोक्यमिति सिद्धं अथ कृष्णपक्षे केचित्ताराबलिपक्षीमाहुस्तद्विषयमुपन्यस्यति अत्रिरिति बहुले कृष्णपक्षे
पि तारकापतेश्चंद्रस्य बले सति तारकां बलीयसीं अत्रिमुनिराह कृष्णपक्षेपि न केवलं तारा बलीयसी किंतु तारकापति
बले सति अतः कृष्णपक्षे चंद्रबलालाभे सति ताराबलं न प्रमाणमिति मुनेराशयः ८ अथ मतांतरं दूषयितुमुपन्यस्यति
विकलं वर्ष्म शरीरं यस्यासौ विकलवर्ष्मा शरीरं वर्ष्म विग्रह इत्यमरः तस्मिन्विकलशरीरे प्रोषिते प्रवासं प्राप्ते वा प्रियेभ

होरयापि हिमरश्मिरादृतः पुंस्कलेषु सुनफानफादिषु अत्रिराह बहुलेपि तारकां तारकापतिबले बली
यसीम् ८ प्रोषिते विकलवर्ष्मणि प्रियेनोलिलिः स्त्रियमियेष कार्यिणीं अस्तु किंतु न पतिः प्रतीयतां
सान्यथा घटयितुं पटीयसी ९॥

र्तरि सति नोलिलिर्मुनिः स्त्रियं कार्यिणीं इयेष वोढुं न कार्यं विद्यते यस्याः सा कार्यि
णी कार्यकर्त्री अत इनिठनाविति मत्वर्थे इनिः कृत्यस्य यात्रस्य निषेधेपि क्वचिद्विधानात् कृष्णपक्षे चंद्रस्य क्षीणशरीरत्वा
त् वनस्यन्यादिषु प्रोषितत्वाच्च तत्पत्न्यास्ताराया स्वबलं मुख्यमिति भावः सतदप्युपेत्य दूषति अस्तु किंत्विति तारका का
र्यिणी अस्तु तर्हि किंतु सा तारा अन्यथा प्रकारांतरेण पतिं प्रतीयतां भर्तुरभिप्रेतानां हि परीत्यं घटयितुं न पटीयसी न समर्थाभि
तिशयेन पटुः पटीयसी सा स्वयं कर्त्री भवतु परं तु भर्तृप्रतिकूलकार्येन क्षमेत्यर्थः अतः कृष्णपक्षे चंद्रबलाभावेनाराबलं म

अथयदिकृष्णपक्षेनष्टश्चंद्रइत्युच्यतेतद्विषयमाह सच्चंद्रमाःबहुलेकृष्णपक्षेकेवलंक्रौर्यमेति अमावसन् सन्नैवन
श्यतितमांक्रूरस्यभावः क्रौर्यं अतिशयेननश्यतितमां आख्यातात्तमप् आमेत्र तदंतमव्ययं कृष्णपक्षेचंद्रःक्रूर
त्वमेवप्राप्नोतिक्षीणत्वात् दर्शेनुवर्तमानश्चंद्रोनातितरांनश्यति किंत्वदृग्गोचरएव अतोनष्टइत्युच्यते यद्वा
अमावसन्निति पाठः तत्र अमेत्यव्ययंसहार्थे अमासाकंसमंसहेत्यभिधानात् सूर्येणसहवसन्नित्यर्थः एषचं
द्रः तत्र अमायां अमासमीपेचयदिनास्ति अतितरांनष्टोभवति तत्तदाजविधुजन्मकालेषु तत्कृतातेनचंद्रेणकृता

क्रौर्यमेतिबहुलेसकेवलंनैवनश्यतितमाममांवसन् नास्तिचेषयदि तत्रतत्कथंतत्कृताजनिषुरि
ष्टरौद्रता १० पार्श्वगेनिजपतौकुटुंबिनीदुर्बलेपितदभीष्टकार्यकृत् तारकापिशशिनोनुकूलता
संभवेभवतिपक्षपातिनी ११ ॥ ॥

रिष्टरौद्रताकथंस्यात् रिष्टस्यरौद्रता उग्रत्वं रिष्टस्यअतिशयिता यदि
तत्रचंद्रस्यसर्वथा अभावस्तदातज्जनितमत्युग्रमरिष्टंकथंस्यात् अतोऽमायांनैवनश्यतीति किंतुप्रकाशहीनः
तिष्ठतीति ग्रहगणिते प्रत्यक्षमप्यस्ति यदिसनष्टोभवतितदातत्कृतंसूर्यग्रहणंकथंस्यादित्यादि १० अथेति
हासमाह दुर्बलेपिनिजपतौस्वभर्तरि पार्श्वगेसमीपवर्तिनिसतिकुटुंबिनीकुटुंबनिर्वाहकारिणीपत्नीतदभीष्टका
र्यकृत्स्यात् तस्यभर्तुर्यदभीष्टंकार्यंतदेवकरोति तत्तुतत्प्रतिकूलं एवंतारकापिशशिनश्चंद्रस्यानुकू

ल्लनासंभवेनुकूलत्वाल्लाभेसतिपक्षपातिनी अनुकूलत्वंविलोक्यमित्यर्थः अतःकृष्णपक्षेपिचंद्रबलसद्भावेताराबलंग्रा
ह्यमितिसिद्धंतथाचाहुः चंद्रस्यसर्वदाबलमसितेताराबलंग्राह्यमिति ११ इति श्रीसकलागमाचार्यवर्य श्रीकेशवसांवत्सरात्म
जगणेशविरचितायांविवाहवृंदावनटीकायांविवाहदीपिकायांचंद्रबलाध्यायःषष्ठोऽध्यायः ६ अथकेचिद्रहस्यवेत्तारो होराम
न्यंतेतेनदर्पसस्वकौशलंदर्शयन्राहुसत्ताध्यायंवदति तत्रादौवराहोक्तमार्गमप्रामाण्येनदूषयति सत्तदारभ्यवर्योदशरथो
द्धतवृत्तानि यद्वराहमिहिरोनराहु रित्याहराहुर्नास्तीतिब्रूते कथंभूतं उच्चकैस्तांडवितबाहुः उच्चैरेवोच्चकैः अव्ययसर्वना
म्नामकच्प्राक्टेरित्यकच् तांडवंनृत्यविशेषः तांडवंजातंययोस्तौतांडवितौतौबाहूयस्यासौतथा उच्चैर्नर्तितबाहुः

इतिविवाहवृंदावनेचंद्रबलाध्यायःषष्ठः६ अथराहुसत्ताध्यायः यद्वाराहमिहिरोनराहुरित्याहतांडवितं
बाहुरुच्चकैः

सोपहासमिदंविशेषणं अत्रास्मिन्विषयेनत्यथविमाथिनीसंहितास्मृतिसहायिनीश्रुतिर्वहति तस्यपंथास्त
त्पथः अकृपूरब्धूःपथामानक्षइत्यप्रत्ययः तंविमथ्नातितथा तेस्यवराहस्ययोमार्गस्तस्यभंगकर्त्री संहिताश्चतयश्चताःसहायाः
संतिअस्यांसातथासंहितास्मृतिसहिताश्रुतिर्वहति प्रसिद्धास्तीतियावत् राहुर्नास्तीति वराहेणयदुक्तंतत्संहितास्मृतिश्रुतिभिरा
गमैर्विरुद्धमितिभावः तद्यथावराहेणवृसस्वस्वच्छायेत्यादिनासर्वमुपरागकारिणमुक्तमिदंदिव्यदृग्भिराचार्यैःराहुरकारणमस्मि
स्मिन्नित्युक्तःशास्त्रसद्भावादितियोसावसुरोराहुरित्यादिनाचग्रहणेराहुर्नकारणमिति प्रतिपादितं तद्विरुद्धाःसंहिताजित्वाच

लेदिपरिगः स्तिमिरनुदो मंडलं यदि सल्लेहमिति अशनिभयसंप्रदायी पाटलिकुसुमोपमो राहुरित्यादयः स्मृतयश्च सर्वं भू
मिसमं दानं सर्वे ग्रहसमा द्विजाः सर्वं गंगासमं तोयं राहुग्रस्ते निशाकरे इति सर्वेषामेव वर्णानां सूतकं राहुदर्शनमित्यादयः श्रुतयश्च तत्र
माध्यंदिनीश्रुतिः स्वर्भानुर्ह वा आसुरिः सूर्यं तमसा विव्याधेति अथर्वश्रुतौ हंसोपनिषदि च सोहं घनमिति घनमिति किलिकिलिले।
स्य राहोः शिर आच्छादयति भाच्छिन्नपाप्मा वे छायारजनीरूपा पाप्मानं करोति दुराधर्षयति कर्षयति घृणी विरश्मिं विरेचयति पृथ्वी
माच्छादयति दीप्तिमाच्छादयति द्युतिमाच्छादयतीत्यादयः एतत्त्वकौशलदर्शनाय ग्रंथकृतः पांडित्यमात्रयतो राहुर्नास्तीति वरा।

संहितास्मृतिसहायिनी वहत्यत्र तत्पथविमाथिनी श्रुतिः १ नैर्ऋतीदिगियमस्य दिक्पतेर्ध्यानदानबलिभिः
फलाप्तये वेश्म चास्य शशभृद्दिमंडलक्रांतिमंडलमिथश्चतुष्टयं २॥

१ होन ब्रूते किंतु ग्रहणे सैनकारणमिति न
छादक इत्यर्थः अस्य स्मृत्यादिविरोधोऽपि नैव परिहृतः यो सावसुरो राहुस्तस्य वरो ब्रह्मणा पुरा दत्तः सः आप्यायनमुपरागे दत्तहुताशे
नतेन भवितास्मिन्काले सान्निध्यमस्य तेनोपचर्यते राहोरित्यादिना च अथ वराहोक्तिः सम्यगेव १ अथ राहोरस्तित्वे प्रमाणां
तराण्याह अस्य राहोर्दिक्पतेर्दिशाधिपतेरियं प्रसिद्धा नैर्ऋती दिक् अस्ति प्राच्यादिशा रविसितेत्यादिना राहोर्नैर्ऋती दिक् प्र
सिद्धा किंच अयं ध्यानदानबलिभिः फलाप्तये अभीष्टफलसिद्ध्यै भवति तत्र ध्यानं यद्यामलादौ करालवदनः खड्गचर्मशू
लीवरप्रद इत्यादि दानं गोमेदादि बलयः पूजा कृष्णपुष्पोपहारादयस्तैः फलाप्तये भवति एभिः प्रमाणै राहुरस्तीति भावः ननु

वि·वृ· स्यान्येषांग्रहाणांक्रांतिवृत्तेमेषादिग्रहेषुभ्रमणमस्तितद्वदस्यनास्तीतिचेन्नराहोःवेश्मचेतिअस्यराहोःशशभृद्विमंडलक्रांति अ·
टी· मंडलमिथस्त्रत्तुष्यर्थंवेश्मचास्तिचत्वरःपंथानःसमाहतादृतिचतुष्पथद्विगोःक्लीबत्वंपूर्ववदप्रत्ययःविमंलंविक्षेप ७
३७ मंडलंनामैकदेशेननामग्रहणांशशभृतःविमंडलंचक्रांतिमंडलंचेतयोर्मिथःपरस्परंचतुष्पथंशशभृद्विमंडलमिथश्चतुष्प
थं चंद्रस्यशरवृत्तक्रांतवृत्तेनोयःसंपातश्चतुष्पथरूपस्तदेवास्यस्थानमित्यर्थःनचलनेनअस्यापिचलनंसिद्धं तदेवचंद्र
स्यशरपातस्थानंग्रहगणितेप्रसिद्धं ननुदिकृदेशकालावरणादिभेदान्नछादकोराहु रितिब्रुवंतीतिग्रहगणितेप्रत्यक्षंतत्
द्विरुद्धाःस्मृत्यादयःसंति २ अतस्तत्समाधानमाह सराहुरंधकारचरतांवहन्सन्महींछाययासहसोममंडलंविशत्तिअंध

सोंधकारचरतांवहन्महींछाययाविशतिसोममंडले दीपित्तापरदलेंदुमंडलछाययासहचसूर्यमंडलं ३॥

कारेचरतीतिअंधकारचरस्तस्यभावस्तया भूछायाकिलांधकाररूपिणीसोप्यंधकारचरःअतस्तत्साहित्येनचंद्रमंडलंविशति
आछादयतीत्यर्थःदीपितेति अंधकारचरतांवहन्संदीपित्तापरदलेंदुमंडलछाययासहसूर्यमंडलंचविशतिदीपि तमप राम·
रदलंउपरिस्थितदलंयस्यतत् दीपितापरदलंतच्चतदिंदुमंडलंचतस्यछायातथादर्शेकिलचंद्रस्योर्ध्वदलंप्रकाशे अतों ३७
धकाररूपस्यचंद्रमंडलाधोभागस्यछाययासहसोप्यंधकाररूपःसूर्यमंडलंप्रविश्यछा दयतीति अनेनगोलगणितस्य
स्मृत्यादीनांचविरोधःपरिहृतः तथाचोक्तंगोलाध्यायःराहुःकुंभामंडलगःशशांकंशशांकगःछादयतीवबिंबमिति ३॥

ननु शरवृत्तक्रांतिवृत्तयोः संपातो कथं राहुरस्तीति तत्राह पतनं पातः वृत्तयोः शरवृत्तक्रांतिवृत्तयोः पतनमेव पात इत्याहुर्गोलविदः य
तो वृत्तयोः संपातस्ततः पात इत्युच्यते अत्र पाते स्थितो राहुः आपतंतं आगच्छंतं अमृतद्युतिं चंद्रमसमीक्षते गृहीतुमवलोकयतीति किलेत्याग
मेतमेवागमं विशेषणद्वारेणाह सुधेति सुधा अमृतं सुधा च स्नानदानहवनं च तेषामंशो विभागस्तत्र लालसस्तत्परः अत्र संपाते स्थितो
राहुरमृतांशोर्ग्रहणनिमित्तस्नानादीनां मंत्राश्च ब्रह्मवरप्रदानान्मम भविष्यतीति चिंतयन्नमृतद्युतिं गृहीतुमीक्षत इति भावः।
चंद्रो हि अमृतद्युतिः राहुश्च सुधालालसः अतस्तं गृहीतुमीक्षत इति युक्तं रविग्रहेपि चंद्रच्छायासांनिध्यमस्त्येव ब्रह्मवरप्रदा

वृत्तयोः पतनमेव पात इत्याहुस्तत्र किल राहुरीक्षते आपतंतममृतद्युतिं सुधास्नानदानहवनांशलालसः ४
सैंहिकेयगृहतामुपेयुषोर्दूरगो वियति वृत्तपातयोः ग्रासमेति न रविर्न चंद्रमा गृह्यते सन्खलु पार्श्वगस्तयोः ५॥

नादिकं ब्रह्मपुराणादौ प्रसिद्धं अत आगमात्तत्र संपाते राहुरस्तीति भावः स तदेवोक्तं वराहेण योसावसुरो राहुस्तस्य वरो ब्रह्मणायमाज्ञप्तः
आप्यायनमुपरागे दत्तहुतांशेन तेन भवितेत्यादि ४ एवं चेत्तर्हि प्रतिपर्वणि ग्रहणं कथं न स्यात्तत्राह सिंहिकाया अपत्यं सैंहिकेयो रा।
हुस्तस्य गृहं तस्य भावः तां सैंहिकेयगृहतां उपेयुषोः प्राप्तयोः उपेयतुरित्युपेयिवांसौ तयोरुपेयुषोः इण्गतौ उपेयिवाननाश्वा
ननूचानश्चेति क्वसंतो निपातः वृत्तपातयोः शरवृत्तक्रांतवृत्तसंपातयोर्दूरगो रविर्वियति आकाशे स्थितः ग्रासं नैति न प्राप्नोति न च
चंद्रमा ग्रासमेति तयोर्वृत्तपातयोः पार्श्वगः समीपवर्ती स रविश्चंद्रश्च खलु निश्चितं गृह्यते राहुणेति शेषः यद्वा कर्मकर्तरि रू

वि·वृं· एतदुक्तं भवति शरवृत्तक्रांतिवृत्तयोर्द्वौ किलसंपातौ एकश्चंद्रपातस्थाने द्वितीयस्तत्सप्तमं चेति तेद्वे अपि राहुस्थाने एकं राहो अ·
टी· रपरं केतोश्चेति तयोर्दूरगो रविश्चंद्रो वा ग्रासं नेति शरबाहुल्यात् शरो हि राहुचंद्रबिंबमध्ययोरंतरं अतो मानैक्यार्धादूने ७
३९ शरे सत्येव ग्रहणानन्तर्वाधिके एतद्ग्रहगणिते प्रसिद्धं ५ एवं गणितेन राहुसंज्ञा वं प्रतिपाद्य अधुना संहिताजातकाभ्यामप्या
ह स राहुः सूर्यवद्भावगोचरफलेर्न हीयते यतोसौ राशिचक्रवसतिः राशिचक्रे क्रांतिवृत्ते वसतिः स्थानं यस्य स तथा सूर्यो हि क्रां
तिवृत्तेस्ति तत्र राहुरपि चंद्रपातत्वात् अतः संहितासु सूर्यस्य यादृशानि भावफलानि तादृशानि राहोरप्युक्तानि अतो रा

राशिचक्रवसतिः स सूर्यवद्भावगोचरफलैर्नहीयते रिष्टभंगजननैकनायको होरिकैरपि सकेतनीकी
र्त्यते ६ एष शेषखगपाततुल्यतां नेति चंद्ररविपर्वगर्वितः जातकादिषु यथेंदुमंदिरान्कितथानफलम

होर्भावगोचरफलसद्भावाद्राहुरस्तीति भावः एवं जातकेपि रिष्टभंगे निराहुः रिष्टभंगजननैकनायकोभं ॥ न्यराशितः ७
गश्च जननं च भंगजनने रिष्टस्य भंगजनने तयोरेकश्चासौ नायकश्च स तथा होरां विदंति ते होरिकाः तैः कैः कीर्तितः अपि तु रा राम
हुः सर्वैर्जातकविद्भिः रिष्टभंगस्य रिष्टजननस्य च एक एव कर्ता कीर्तित एव तद्यथा राहुश्चतुरस्रयस्थो मरणाय निरीक्षितो ३९
भवति पापैरित्यादीनां रिष्टजननानां अजवृषभकर्किलग्ने रक्षति राहुः समस्तपीडाभ्यः इत्यादीनां च कर्ता ग्रहांतराणां पे
क्षया एक एव कीर्तितः अतोसावपि जातकेनापि स्वीकृत इति भावः ६ नन्वसौ किल चंद्रपातस्तस्य चेद्ग्रहत्वं तर्हि भौमादिग्र

तानामपि कथंनग्रहत्वमितितत्राह एषचंद्रपातः शेषखगानां भौमादीनांयेपातास्तत्तुल्यतांनैतिनप्राप्नोति यतोयंचंद्ररविप
र्वगर्वितः चंद्ररविपर्वणागर्वितः चंद्ररविग्रहणकर्तृत्वेनगर्वंप्राप्तेः यतस्तस्यसंनिहितावेवचंद्रार्कौग्रासंप्राप्नुतः नत्वि
तरेषां अतोसावन्यपातसाम्यंनप्राप्नोतीत्यर्थः किंच जातकादिषुजातकसंहितास्वरशास्त्रयामलादिषुयथाइंदु
मंदिराच्चंद्रराशेः फलंतेषांभौमादीनांराशितः फलंनास्ति अतोयथासर्वत्रफलानिचंद्रराशेस्तथातत्पातराशेरपि
अतश्चासौशेषपातसाम्यंनैति ७ एवंप्रथमेसंपातेराहुस्थितिमुक्त्वाद्वितीयेपितत्स्थितिमाह चंद्रसशावृत्तकोति
वृत्तयोः संपातएवचंद्रपातस्तद्राहोस्थानमितिकिलोक्तं तस्मात्षड्भांतरेद्वितीयः संपातस्तमपरं वृत्तपातंराहुरेतिगच्छ

वृत्तपातमपरंस्वपाततोराहुरेतिसमयात्स्वयंभुवः मंदिरंतदपितस्यतत्क्षतस्त्यज्यतेजगतिदिव्यरिष्टवत् ८



ति तत्राप्यस्तितल्लोकेकेतुरुच्यते तदपिराहोः स्थानंकस्मात् स्वयंभुवोब्रह्मणः समयात् वरस्यसंकेतात् समयाः शपथाचा
रकालसिद्धांतसंविदइत्यमरः संपातद्वयस्यासमीपवर्तितोश्चंद्रार्कयोर्ग्रहणसंभवः अतोब्रह्मवरप्रदानात् संपातद्वयेपिराहोर
वस्थितिरागमसिद्धा तत्रतस्मिन् द्वितीयसंपातेगतोराहुर्जगतिइहलोकेदिव्यरिष्टवत्त्यज्यते दिविभवंदिव्यंतच्चतद्रिष्टंच
तद्वत् दिव्यान्यरिष्टानिनक्षत्रजानितेषुमुख्यंदिव्यंकेतुः अतोत्रदिव्यरिष्टशब्देनकेतुर्गृह्यते द्वितीयसंपातेगतोराहुरेवलो
केकेतुनाम्नात्यज्यतइतिभावः यतोब्रह्मपुराणादिषुविष्णुनासुदर्शनच्छिन्नराहोः शिरोराहुरपरंकेतुरित्युक्तं अतएवकमे

वशरीरं द्विधाभूतं राहुकेतुसंज्ञमिति ८ ननु एवं शेषखगेत्यादिना यदुक्तं सर्वग्रहेषु मध्ये फलदातृत्वे चंद्रस्य मुख्यत्वात्तस्यापि फलदातृत्वं नहिं तदुच्चस्यापि तत्कथं न भवेदित्यनूद्य परिहरति शीतगोः उच्चं फलदं किलास्तु किंवत् पातवत् केन हेतुना गतिवशेन यथा प्रागुक्तं चंद्रस्य फलदातृत्वं मुख्यत्वात्तत्पातस्य फलदातृत्वं गतिसद्भावात् तद्वत्तदुच्चस्यापि गतिसद्भावात्फलदातृत्वं किलास्त्विति भावः इतिचेदस्तु नहिं किंतु हि यस्मात्कारणात्तदुच्चं विरिंचिना ब्रह्मणा ग्रहपदे ग्रहपंक्तौ न निवेशितं तेन तस्यापि तत् उच्चस्य ग्रहत्वाभावात्फलदातृत्वमिति भावः ९ एवं चंद्रोच्चस्य फलदातृत्वमागमाभावान्निरस्य गोलयुक्त्यापि

पातवद्गतिवशेन शीतगोरुच्चमस्तु फलदं किलेति चेत् अस्तु किंतु नहि तन्निवेशितं राहुवद्ग्रहपदे विरिंचि
ना ९ किंच गोलगणितानि यन्मही मध्यकेंद्रमधिकृत्य तेनिरे ॥ ९

दूषयति किंच युक्त्यंतरेणापि दूषणमस्ति यत् गोलगणितादीनि कक्षावृत्तादीनि मही मध्यकेंद्रं मही मध्ये वृत्तस्य मध्यं किल केंद्रमुक्तमिति सिद्धांतोक्तेः तत् अधिकृत्य प्राथम्येन धृत्वा तेनिरे विस्तृतानि कर्मकर्तरि रूपं यतः सर्वेषां कक्षावृत्तनाडिकावृत्तादीनां मध्यं भूगर्भ एव एतद्गतत्वस्मिन् भूगर्भे स्थितो नरः पातवर्त्मनि पातमार्गे स्थितं स्फुटं शशिनं नित्यमुच्चहेतुमीक्षते पश्यति अपिरेवार्थे विगतः उच्चहेतुर्यस्मात्तथा उच्चस्य हेतुं विनापीत्यर्थः एतदुक्तं भवति फलभंग्या कक्षावृत्तस्य भूगर्भो मध्यं प्रतिवृत्तस्य मध्यं भूगर्भादंत्यफलज्यांतरे तत्र प्रतिवृत्ते मध्यमचंद्रस्तदुच्चं च तन्मध्ये चंद्रकेंद्रकक्षावृत्ते तु स्फुटचंद्रः तत्रैव तत्पातः अथ उक्तं च चंद्रस्य कक्षा।

वलयेहि पातइति अतोभूगर्भस्थोद्रष्टाकक्षावृत्तेस्फुटचंद्रे पश्यति नत्वैवतन्यातग्रं अतोनयोरेकवृत्तचारित्वाच्चंद्रवशेनतन्यातस्यापि फलदातृत्वं ननूच्चस्य अतउक्तंव्युच्चहेतुमिति एतत्तु ग्रंथकृतोक्तं जनानाव्यामोहनमात्रं वास्तवंतुनैतत् तथाहियद्यपिप्रतिवृत्तस्यनीचोच्चवृत्तस्यवायदुच्चस्थानंतदेवोच्चमित्यस्ति तथाप्युच्चहेतुंविनाकक्षावृत्तेस्फुट चंद्रदर्शनंकथंस्यात् स्फुटचंद्रस्यकारणमुच्चंभवत्येव उक्तंचसूर्यसिद्धांते अदृश्यरूपाःकालस्यमूर्तयोभगणाश्रिताः शीघ्रमंदोच्चपाताख्यग्रहाणांगतिहेतवइत्यादि अतोव्युच्चहेतुमिति यदुक्तंतन्नचतुरस्रमिति प्रतिभाति अतएवयुक्तंपतरेवस्यति अर्कमर्कजेत्यादि १० अथपदुक्तंगतिवशेन

तद्गतः शशिनमीक्षतेस्फुटं व्युच्चहेतुमपिपातवर्त्मनि १० अत्रयेनविकलादलार्धमप्यह्नियांतिफ
लमस्तुकिंततः तावदेवफलगौरवंगतिर्यावतीत्यधिफलःकलानिधिः ११ ॥९

तद्दृढयन् अन्यपातानांफलदातृत्वासंभवं प्रतिपादयन्चंद्रस्यफलगौरवंदृढयति अत्रयेभौमादीनांपाताःविकलादलार्धं विकलायादलंतदर्धमपि अह्नि दिवसेन यांतिनगच्छंतितेभ्यःफलंकिमस्तु अपितुनास्तुनहितेवर्षशतेनापिकलामात्रंचलंति अतोयावतीगतिस्तावदेवफलगौरवं यथा यथागतिरधिकातथातथाफलगौरवं अल्पकालेनैवफलवैफल्यवैचित्र्यात् इतिहेतोःकलानिधिश्चंद्रमाःसर्वग्रहेभ्योधिफलः अधिअधिकंफलंयस्यासावधिफलः अन्यग्रहाणांगतियोगोपिचंद्रगतिसमोनस्यादतोसावधिकफल इतिभावः तथाचोक्तं सकलस्वग्रहाः सर्वएकतःशशलांछनः ततोधिकतरश्चंद्रस्तस्माच्चंद्रपरीक्षयेदिति ११ अत्रयःसंपातःसएवरा

हुरित्यर्थे प्रमाणांतरफलमाह किंचप्रमाणांतरमप्यस्तिजिष्णुजोब्रह्मगुप्तः सोमः प्रसिद्धः रोमकोमुनिः मयोमयासुरः आदिश
ब्देनपितामहवसिष्ठादीनांग्रहणं नत्रुएते तांत्रिकाः शास्त्रप्रणेतारः राहुपातयोर्नामनी पर्याये गौणविदधुः पातपर्यायेराहुश
ब्दंप्रयुंजते घटकलशवत् तथाचोक्तं कुमुदिनीपतिपातोराहुमाहुरिहकेपितमेवेति अतोयः पातः सएवराहुरितिसोमरोमकादीनां
मुनेवृंतसंपातएवराहुरित्यर्थः १२ ननुपातएवराहुर्भवतु उच्चस्य फलदातृत्वाभा किमायातं नत्रह्युच्चहेतुर्निमित्तकारणमुपन्यस्तं
तदपिसूक्ष्मदृष्ट्या विचार्यमाणेसंदिग्धमित्याशंकांमनसिधृत्वा तन्निरासेयुक्त्यंतरमाह तदुच्चयदिपृथग्भवेत्फलदातृत्वेस्वतंत्रं

किंचगोलगणितेषुजिष्णुजः सोमरोमकमयादयोपिचपर्ययेणतत्रराहुपातयोर्नामनीविदधुरेवतांत्रि
काः १२ अर्कमर्कजकुजार्यतुंगतांकिंनयंतियदितत्पृथग्भवेत् ॥१ भवेत्तर्हिसोमरोमकादयः अर्कजकुजार्यतुंगताः अर्कं।

किंनयंति आर्यो गुरुः अर्कजकुजार्याणांतुंगतस्यभावस्तथा शनिभौमबृहस्पतीनांशीघ्रोच्चसूर्यएवेति कथं वदंतीति यद्येषांसूर्य
एवशीघ्रोच्चंतदातस्यफलदातृत्वेपृथक्त्वंनस्यात् ततस्मात्कारणादियंकल्पनाउच्चंहिकल्पनामात्रंमंदफलानिसाधनायेति
उक्तंचगोलाध्याये यःस्यात्प्रदेशः प्रतिमंडलस्यदूरेभुवस्तस्यकृतोच्चसंज्ञासोपिप्रदेशश्चलतीति तस्मात्प्रकल्पितातुंगगतिर्मु
निंद्रैरिति अतउच्चस्यकल्पनामात्रत्वात्नफलदातृत्वंतर्हि पातोपिशरसाधनायकल्पनामात्रं कथंतस्यापिफलदातृत्वंभवेदित्या
शंकायामाह उच्चमुच्चरंतितिउच्चंरोपितफलमुच्चरनकथयन्कोपिनक्षत्रः शीघ्रितंफलंयस्मिन्तत्तथा उच्चस्यफलंकुत्रा

पिनश्रुतं तस्यफलश्रवणाभावात्कल्पनामात्रत्वमितिभावः अतःपातस्यग्रहत्वंयुक्तं उच्चस्यफलदातृत्वाभावेग्रंथकृताकिमं
र्थमेतावत्प्रपंचितंपर्यवसानेतुआगमएवअतः प्रथमंतस्यवतत्रागमाभावःकारणंकथंनवक्तव्यमिति १३ ननुदिनादेराधि
पत्यंतस्यपातस्यकथंनास्तीति तत्राह शालिनीवृत्तं अह्नोराह्नोरहोरात्रवर्षाधिपत्यंनास्ति अहोरात्रंवारःवर्षंवत्सरःमासा
स्होरादीनामुपलक्षणंतेषांस्वामित्वंराहोर्नास्तीतिसत्यंसत्यमेवेति व्यंग्योक्तिःतथापिसर्वव्योमगानां अधीशौपुष्पवंतौ
चंद्रार्कौयस्यराहोःछायापिनष्टिचूर्णयति पिषपेषणेतस्यराह्नोःस्वामितायाविनष्टिःविनाशःकास्तेनकुत्रापीति स्वकपो

कल्पनातदियमुच्चमुच्चरन्कोपिरोपितफलंनचश्रुतः १३ राहोर्नाहोरात्रवर्षाधिपत्यंसत्यंसर्वव्योमगानाम
धीशौ यस्यछायापुष्पवंतौपिनष्टिकास्तेनस्यस्वामितायाविनष्टिः १४ प्रतिदिनंखचरःप्रचरन्फलंकिम



त्यापुष्पवंतौदिवाकरनिशाकरावित्यमरःग्रहाधीशौचंद्रार्कौयस्यछायामात्रंविह्वलयति न ((पियच्छतिचारफलंहिसः
स्यस्वामित्वंनास्तीतिवक्तुंनशक्यते अतःपारंपर्येणदिनवर्षादीनामप्याधिपत्यंतस्यास्त्येवेतिभावः १४ अथगतिवशात्फलमिति
प्रतिपादयन् राहोर्गतिसद्भावप्रमाणमाह द्रुतविलंबितंखचरःप्रतिदिनंप्रचरन्सन् किमपिफलंयच्छति हियस्मात्कारणा
त्सखचरः चारफलंचारेणागत्याफलंयस्यासौतथायस्मात्खचरःचारफलइत्युच्यते तस्माद्यथायथायोग्रहःकिंचिच्चलति
तथाफलंयच्छतीत्यर्थःसराहुःग्रहणाकृष्टगएवास्तिग्रहणेतस्त्रेस्थितएवास्तिकुत्यकइतिप्रकृतिकत्वं विपक्षेप्रत्यक्षवाध

माहस्तचेदिनिसराहुः चेद्ग्रहणसंगोनास्तीतर्हिउपप्लवः किंचित्किंचलति उपप्लवोग्रहणं एतदुक्तंभवति ग्रहणोराहुसान्निध्यमस्त्ये
वेति प्राक्प्रतिपादितं ग्रहणेहि किंचिन्ननिमासंसार्धैकभागप्रमाणेतिषण्मासैर्नवभागैः एष्ठतश्चलत्येवतत् एकंग्रहणांयस्मिन्नस्
त्रेहष्टंतत्परं नत्स्थतस्त्रेनत्परमपि नत्स्थनस्त्रेइतिप्रत्यक्षंदृश्यते अतोग्रहणचलनमेवराहुगतिः ग्रहणेवश्यंतत्
त्सांनिध्यात् अतश्चराहोर्गतिसद्भावात् ग्रहत्वंफलदातृत्वंचसिद्धं १५ एवंराहोर्ग्रहत्वादिकंसंस्थाप्यानयैवयुक्त्याकेतोरपिग्र
हत्वंसंस्थापयति इतिविलंवितंयदादिवि आकाशेतत्परंतस्यराहोः परंपश्चिमकायःउदयंएतितदाकेतुरपिप्रतिवासरंचरतीति

ग्रहणाक्षसंगएवसचेन्नकिंचलतिकिंचिदुपप्लवएवतत् १५ उदयमेतियदादिवितत्परंचरति
केतुरपिप्रतिवासरं भवतिनग्रहएवगतिं विनाजगति कर्मविपाकवदावदः ॥ १६ ॥ ६ ॥

स्यात् एतदुक्तंभवतिवृत्तपातमपरमित्यादिनाराहोः षड्भांतरेयोद्वितीयःसंपातस्तस्यग्रहस्यकेतुरितिप्रतिपादितंतत्सांनिध्यादपियद्ग्र
हणंतदपिप्राग्वच्चलति अतः केतोरपिगतिःसिद्धागति सिद्धौसत्यांग्रहत्वंफलदातृत्वंचसाधयति भवतीतिगतिंविनाग्रहएवनभ
वति कथंभूतः जगतिइहजनेकर्मविपाकवदावदः कर्मणोविपाकस्तंवदतीतिकर्मविपाकवदावदः पचादित्वादच् चरिचलि
पतिवदीनांवादित्वमच्याक्चाभ्यासस्येति द्वित्वमभ्यासस्यात्वंच यस्यहिगतिरस्तिसएवग्रहोभवति अतोसौपूर्वकर्मविपाकजनि
तस्यशुभाशुभस्यसूचकोभवेत् तस्मात्केतोरपिग्रहत्वंफलदातृत्वंचसिद्धं १६ ननुग्रहणेतमएवप्रत्यक्षंदृश्यतेसकथंग्रहोभवे

दितिपरमताशंकांभोजराजेनदूषितेत्याह इतिविस्तंविते उपरागेग्रहणेपरागतंप्राप्तंतमउपप्लवोरिष्टमेवेति परिहरंतित्यजंतिसकिं
ग्रहःसग्रहएवनभवतीतितथाहि चंद्रार्कयोर्ग्रहणेस्वाभाविकदीप्तेरवरोधकंमत्स्यंयन्नमोदृश्यते तदुत्पातएव प्रकृतेरन्यत्व
मुत्पात इत्युक्तत्वात् परिवेषादिवत् अतस्ततमउत्पातएवेतिपरिहरंति आचार्या इतियन्मतं तन्मणित्थवचांसिविवृण्वता
मणित्थवाक्यानांविवरणंकुर्वता भोजमहीभुजा भोजराजेनअतस्तत अच्छिद्युत नसूतत्रुकरशो कर्मणिलङ् एतन्मतंमणित्थ
वाक्यविवरणेभोजराजेननिराकृतमित्यर्थः तद्यथाउत्पातोहिगणितागतत्वान्नोपलभ्यते ग्रहणंहिसम्यगुपलभ्यते अतोनोत्पातः

परिहरंत्युपरागपरागतंतमउपप्लवएवसकिंग्रहः इतिमणित्थवचांसिविवृण्वतामतमतस्ततभोजमहीभु
जा २७ अथाप्यसौकेवलवासनायांनायातिसिद्धिंतदपिप्रियंनः अवासनंकिंनसुरद्युरात्रमर्कायनाभ्यांभव
((तैवभेजे २८।

किंचउत्पातोहिदोषविशेषेणयत्रक्वचनदृश्यते चंद्रग्रहणंतुसर्वदेशे अतश्चनोत्पातइतिगणितागतमन्यसं
आगमश्चब्रह्मणोवरप्रदानादिग्रहचारेतत्फलकथनंचलोकप्रसिद्धिश्च राहुकृतंग्रहणंस्यादागोपालांगनादिसिद्धमिदमितिब्रह्म
गुप्तः अन्यापिपुरस्तादुक्तायुक्तयश्च इत्यादिप्रमाणैस्तन्मतंभोजराजेननिराकृतमितिभावः २७ नन्वागमप्रामाण्येनराहोःसिद्धिर
स्तिपरंतुदिग्देशकालावरणादिभेदैर्गोलवासनायांसिद्धिर्नास्तीतितत्राह उपजातिका अथापियद्यपि असौराहुःकेवलायांस
कलायामेवगोलवासनायांसिद्धिंनायाति तदपिनोस्माकंप्रियं मास्तुगोलवासनायांसिद्धिःतत्कथं अर्कायनाभ्यांसूर्यस्योत्तर

दक्षिणायनाभ्यासुराणांदेवानांद्युरात्रमहोरात्रं। अवासनंवासनाबाह्यंभवतान्वयैवकिंनभेजेकिंनस्वीकृतं अपितुस्वीकृतमेवद्यु
इत्यव्ययंदिनवाचकमितिक्षीरस्वाम्यादयःएतदुक्तंभवति मेरुगतानांदेवानांनाडिकामंडलंक्षितिजंतस्मादुपरिस्थिताःक्रांति
वृत्तेमेषादयःषट्राशयोदृश्याःतुलादयःषट् अधःस्थिताः अदृश्याः अतोमेषादिषड्राशिस्थितेर्के देवानां दिनंतुलादिस्थिते
रात्रिरितिद्युरात्रंगोलवासनासिद्धं शिशिरपूर्वमृतुत्रयमुत्तरंह्ययनमाहुरहश्चतदापरमित्यादिना पुराणादिषुउत्तरायणं
दिनंदक्षिणायनंरात्रिरित्यागमस्यविरोधभयादिदंवासनाबाह्यमपिद्युरात्रंत्वयापिस्वीकृतमतोस्माभिरप्येकमिदं अ

सिद्धांतपक्षस्तुपरंदिनार्धान्निशानिशार्धान्परतोदिनश्रीः सर्वंपुराणेगणितेचसाम्यमर्कायनाभ्यांस
दसत्फलेषु २९ कर्कंगतेर्केहिसुरापराह्णःफलंपुरारात्रिवदाहुरस्य २९ वासनमागतभयात्स्वीकृतमितिभावः

॥२८ अथानयोर्विरोधंपरिहरति उपजातिकासिद्धांतपक्षस्त्वयंसिद्धांतस्यायमाशयइति दिनार्धात्परंनिशानिशार्धात्परतोदिन
श्रीर्दिनलक्ष्मीर्दिनमेवेतियावत् सर्वंसत्यमर्कायनाभ्यांसकाशात्सदसत्फलेषुविषये पुराणेगणितेचसाम्यस्यात् एतदुक्तं भवति
गणितेकिलकर्कसंक्रमेदिनार्धतत्परंरात्र्युन्मुखत्वाद्रात्रिरित्युच्यते सर्वंमकरसंक्रमंनिशार्धतत्परंदिनोन्मुखत्वाद्दिनमेवेतितत्
थाचसिद्धांतेविरोधपरिहारःदिनंसुराणामयनंयदुत्तरंनिशेतरत्संहितिकैःप्रकीर्तितं दिनोन्मुखेर्केदिनमेवतन्मतंनिशात
थातत्फलकीर्तनायतदिति २९ अथैतदेवस्पष्टयति उपजातिका व्याख्यातप्रायमेतत् हियस्मात्कारणात्कर्कंगते अर्के

सतिसुराणांदेवानां अपराह्णःस्यात् अन्हः अपरं अपराह्णः दिनोत्तरार्द्धं अस्यफलंपुनःफलंतुरात्रिवदाहुःनक्तंमकरंगतेअर्के
सति एषांदेवानां अपररात्रसमंरंनिरात्रेः अपरं अपररात्रः अह्नःसर्वैकदेशेन्यच रात्राह्नाहाःपुंसीति पुंस्त्वे एतत्परं एतस्मात्परंवास
रवत्समंरंनिसंहिताकारादयः अस्यदृढीकरणार्थं एतदृष्टांतमन्यत्राप्याह २० उपजातिकाकिलेत्यहं नक्रे अतश्चहेतोः दशमीष्व
पिप्राक्पूर्वकापालिकोवेधविधिरुक्तः निशार्धाद्दिनार्धपर्यंतंप्राक्कपालेदिनार्धान्निशार्धपर्यंतंपश्चिमकपालंग्रहगणितेप्रसिद्धं
तयोःकपालयोर्भवःकापालिकः अयंभावः दशमीशेषसंयुक्तोयदिस्यादरुणोदयः वैष्णवैस्तुनकर्तव्यंतद्दिनैकादशीव्रतमित्यादि

नक्रेगतेचापररात्रमेषामेतत्परंवासरवत्समंरंनि २० अतश्चकेश्चिद्दशमीष्वपिप्राक्कापालिकोवे
धविधिःकिलोक्तःमासोन्यएवन्नियमव्रतादौपित्र्येनिशार्धेसतिपूर्णिमास्या २१ ॥ ७ ॥

वाक्यैररुणोदयेदशम्याविद्धैकादशीयथावैष्णवैस्त्यज्यते नहूत्केश्चिन्निंबादित्यसंप्रदायिभिरर्धरात्रेदशम्याविद्धैकादशीत्य
ज्यते अर्धरात्रादुपरि उत्तरदिनप्राप्तेः तद्वाक्यंच अर्द्धरात्रेपिकेषांचिद्दशमीवेधइष्यतेश्च धर्मशास्त्रेपित्र्याशौचांतेवा
दिषुकेचिदर्धरात्रादुपर्युत्तरदिनमिच्छंति अतश्चविष्टिरंगारकश्चैवव्यतीपातश्चवैधृतिः प्रत्यरिर्जन्मनक्षत्रंमध्यान्हा
त्परतःशुभमित्यादिवाक्यानामवकाशः अपिचमासोन्यइति एवमनेनैवहेतुनापौर्णमास्यांपित्र्येनिशार्धेसतिनिय
मव्रतादावन्योमासःस्यात् पितॄणामिदंपित्र्यंतु नियमाः चातुर्मास्येशाकदध्यादित्यागादयः व्रतानिकार्तिकव्रतादी

निनेषामारंभः पूर्वमासस्य पूर्णमासीमारभ्यैव यतस्तत्र पितृणां निशार्धं तथा हि चंद्रस्योर्ध्वभागे वसंतः पितरः स्वमस्तकोपरि द
र्शे सूर्यं पश्यंति अतस्तत्र दिनार्धं एवं पूर्णमास्यां सूर्यस्य अधोर्ध्वस्थितत्वादर्धरात्रः कृष्णपक्षार्द्धे सूर्योदयः शुक्लपक्षार्धेऽस्तमयः।
इति पिच्यमानस्य वासनायां सिद्धांते प्रसिद्धं २१ अथ राहुसद्भावे प्रमाणांतरमाह द्रुतविलंबितं तत्तस्मादिति हेतोः स राहुर्विद्यत एव
परैरन्यैर्हेतुभिः किं अन्यैर्हेतवः क्लिष्टं तु तमेव हेतुमाह रुधिरेति रुधिरबिंदुवपुर्ये यातनायां ये तामसकीलककेतवो विलसंति तेऽस्य
पितृराहुसमर्थनहेतवः स्युः रुधिरस्य बिंदवो यस्मिन् तद्रुधिरबिंदु तच्च तद्वपुश्च तत्तथा वपुः शरीरं तामसकीलकाश्च ते केतवश्च

तदिति विद्यत एव स किं परै रुधिरबिंदुवपुर्विलसंति ये तदूहतामसकीलककेतवः स्वपितृराहुसमर्थनहेतवः २२
यः पर्वगस्तस्य गतिर्न दृष्टास्यैव ग्रहत्वेऽपि महत्प्रमाणं विलोमगामी विधुपात एव तस्माद्ग्रहो राहुरिति प्रतीतः २३

तेन यास्त्वश्वासौ पिता च स्वपिता तस्य समर्थनं संस्थापनं तत्र हेतवस्ते तथा तामसकीलकाख्या ये केतवस्ते राहुसुताः सुतत्वात्तेषां
केतूनां पिता राहुरस्तीत्यर्थः तथा चोक्तं वराहसंहितायां स्तनजानलानुरूपाः त्रिभूलताराः कुजात्मजाः षष्टिः नाम्नाच कौकुमारास्ते
सौम्याशासंस्थिताः पापाः त्रिंशत्त्र्यधिका राहोस्ते तामसकीलका इति ख्याताः रविशशिगाः दृश्यं तेन तेषां फलमर्कवच्चोक्तमिति।
॥२२॥ राहोर्ग्रहत्वं प्रागुक्तप्रमाणेन भंग्यंतरेण द्रढयति उपजातिका यः पर्वगो ग्रहणगो राहुस्तस्य गतिः साक्षान्न दृष्टा किं
त्वनुमानेन ग्रहणक्षः स्पगएवेत्यादिना अतो गतिरस्तीत्यनुमानसिद्धं सैव यतिर्ग्रहत्वे महत्प्रमाणं हि यस्मात्कारणादेव विधुपा

तोराहुर्विलोमगामीसदावक्रचारी अस्ति यथा चंद्रार्कौसदानुलोमगामिनौ तथैवायंसदाविलोमगामीति तथाचभूपालः राहुकेतू सदावक्रौशीघ्रगौशशिभास्करावितिं तस्माद्धेतोराहुरितिप्रतीतः प्रत्ययप्राप्तः सतद्राकांग्रथकृतोनभवतीतिप्रतिभाति प्रतिदिनं खचरइत्यादिनापौनरुक्त्यापत्तिः नदिति विघातइत्यनेनाध्यात्समाप्तिप्रतीतेश्च २३ इतिश्रीसकलागमाचार्यवर्यश्रीकेशवसूनो सरात्मजगणेशदैवज्ञविरचितायांविवाहवृंदावनटीकायांविवाहदीपिकायांराहुसंज्ञाध्यायः सप्तमः ७ अथषड्वर्गादिफला नि विवक्षुस्तावत्तन्वादिभावानयनं जातकशास्त्रीयमप्यत्रसौकर्यार्थमाह नवशालिनीवृत्तानि लग्नादर्कवद्धीत्रिखंडंकृ

इतिश्रीविवाहवृंदावनेराहुसंज्ञाध्यायः सप्तमः ७ अथषड्वर्गाध्यायः कृत्वालग्नादर्कवद्धीत्रिखंडंभू
योव्यक्षैस्तद्धटीभिर्विलग्नं चक्रार्धोनेतेचतत्कालएवंजाये यातामस्तमध्यान्हलग्ने १॥ ६ ॥

त्वातस्यघटीभिर्भूयःपुनर्व्यक्षैर्लग्नंकार्यं तद्यथा लग्नमेवसूर्यंप्रकल्प्य अयनांशान्दत्वातस्माच्चरं कृत्वारात्रिदलंकार्यं तमिष्टकालंप्रकल्प्यतस्मात्सायनांशलग्नात् लंकोदयैर्भोग्यादिकंकृत्वालग्नंकार्यमिति अर्थात्तच्चतुर्थलग्नेस्यात् तेद्वेलग्नेच क्रार्धोनेषड्राश्यूनेकार्येएवंतेतत्काले अस्तमध्यान्हलग्नेक्रमेणजायेयातां उत्पन्नेभवेतां १ लग्नंतुर्याच्चतुर्थलग्नाच्चोर्ध्वं तुर्यमस्तात्सप्तमलग्नाच्चोर्ध्वं अस्तंमध्यात् दशमलग्नाच्चोर्ध्वंमध्यमैंद्रीविलग्नाच्चोर्ध्वं इंद्रस्येयमैंद्रीपूर्वादिक् तत्रवि लग्नंतदेवलग्नमित्युच्यते तस्मान्मध्यंशोध्ये शेषाणांचतुर्णामपिपृथक् पृथक्त्र्यंशान् आद्येषुलग्नादिषुहिद्विवारंदद्या

वि॰ वृ॰ टी॰ ५५ एवममुनाप्रकारेण भावाः स्युः तद्यथा लग्नं चतुर्थाद्विशोध्य तत्षडंशं लग्ने दत्त्वा द्वितीयभावो भवेत् पुनरपि तमेव षडंशं द्विती अ॰ ८
यभावे दत्त्वा तृतीयभावो भवेत् एवं तुर्यं सप्तमाद्विशोध्य तत्षडंशेन तुर्ये दत्ते पंचमषष्ठौ भावौ स्तः एवमष्टमनवमो
दयः एतयोः दलैक्यं संधिः स्यात् तद्यथा द्वादशभावलग्नयोरैक्यदलं तन्मध्यवर्ती संधिः स्यात् एवं लग्नद्वितीययोर्द्वितीयतृती
ययोरित्यादि २ अथ ग्रहफलानां भावकल्पनवशात्तारतम्यमाह संधौ स्थितो ग्रहो निःफलः शुभफलोऽन्यशुभफलोऽपि भा
वभागे तुल्यः खेटः सम्यक् परिपूर्णां भावपंक्तिं भावफलं व्यनक्ति प्रकटयति ददातीति यावत् संधेः सकाशादूनाधिक्यमाप्तः

लग्नं तुर्यात्तुर्यं सप्तमाद्विशोध्यं मध्यादस्तं मध्यमेंद्री विलग्नात् शेषषडंशान् द्विर्द्विराद्येषु दद्यादेवं भावाः संधिरे
तद्दलैक्यं २ संधौ खेटो निःफलो भावभागे तुल्यः सम्यक् भावपंक्तिं व्यनक्ति संधेरूनाधिक्यमाप्तो गतैष्यबाधी।
नां संदधाति स्वपाकं ३ नांगीकारो भावजानां गुणानां नो तद्दोषाणां न त्वतस्त्याग एव॥ प्राप्तः खेटगतैष्यभावाधीनां स्व

पाकं संदधाति संधेरूनो ग्रहो गतभावजं फलं अधिकश्चेदेष्यभावजं फलं ददातीत्यर्थः तत्पदं पादोऽर्धमिति त्रैराशिकेन कल्प्यं रा॰
मनेन विधिना यत्र भावे स्थितो ग्रहस्तत्फलं भावजं लग्नराशेः सकाशाद्यावतिराशौ स्थितो ग्रहस्तत्फलं स्वाभाविकं ३ अन्योन्य ५४
भेदे सति निर्णयमाह भावेन भावकल्पनायां ये जाता गुणास्तेषां गुणानां नांगीकारः न स्वीकारस्तस्माद्भावकल्पनवशाद्ये दोषास्तेषां
दोषाणां नत्वतः साकल्येन त्याग एव अत्र प्रथमस्योदाहरणं भावेति स्वाभाविके लग्नात्सप्तमः सशशिः सूर्यो भावव्यत्यासे।

त्यांभावकल्पनया अष्टमंगतोपित्याज्य एव सप्तसप्तयोश्वा: यस्यासौतथासतदुक्तंभवतिसूर्य: किलसप्तमोदुष्ट: अशुभ:
शुभ:स्वाभाविकेनसप्तम:सूर्य: यदिभाववशादष्टमोभवेत्तदासौशुभोपित्याज्यएव ४ अथसयुक्तिकंद्वितीयोदाहरणमाह।
यस्मात्कारणाद्दोष:पाक्षिकोपिमन्यारव्येयस्या गुणस्तु य: सम्यग्व्यापीसोनुगम्य: अनुसरणीय: सम्यग्व्याप्नोतीति सम्यग्व्या
पीसर्वसंमत:पक्षांतरगतोपिदोषस्त्याज्योगुणस्तुसर्वसंमतएवग्राह्यइत्यर्थ:तस्मात्कारणात्पंचमोपिभार्गव: स्वांशेभोगैर्गेहह
भावाङ्गहभावभोगेभ्य: अधिक:सन्भूत्यैशुभायनस्यात् अयंभाव: पंचम: शुक्र: किलशुभ:षष्ठोशुभ:भावादुभयतोये संधीन

भावव्यक्तावष्टमत्वंगतोपित्याज्योलग्नात्सप्तम:सप्तसप्ति: ४ मन्यारव्येय:पाक्षिकोपीहदोष: सम्यग्व्या
पीयोगुण:सोनुगम्य: यस्मादंशेर्गेहभावाधिक:सन्नस्याद्भूत्यैभार्गव:पंचमोपि ५ ॥ छ ॥ ॥ ॥



दंतवर्त्तिनोंशास्तेनतद्भावस्य अत:पूर्वसंधे:सकाशादंशेरधिकोग्रहउत्तरभावस्थितोभवेत् अत:स्वाभाविकेनपंचम:शुक्रोय-
दिभाववशेनषष्ठोभवेत्तथापित्याज्य एवेति अथलग्नानद्दृटिकाज्ञानंविवस्वत्तदर्थंतावत्संक्रांतिज्ञानमात्रेणसूर्यज्ञानंलग्नां
शज्ञानंचाह ५ अंतर्मध्येवासरा: अंतर्मध्येवासरा:संक्रांत्योरंतर्वा रास्तैस्तथा नैर्युर्वृंदादिनगणायद्वादिराश्यादिलब्धंत
न् मेषादिराशिभिर्भिश्रयुक्तभानु:स्यात् तद्यथा संक्रांतिमारभ्यइष्टदिनपर्यंतं योगतो दिनगण:सपूर्वसंक्रांतिमार-
भ्यउत्तरसंक्रांतिपर्यंतेयेमध्यवर्त्तिनोदिवसास्तैर्भक्त: तस्माद्राश्यादियल्लब्धंतत्संक्रांतिवशेन गतराशिभिर्युक्तरा

ष्याद्दिको भानुः स्यात् अथ लग्नांशाल्लग्नं भक्ताइतिलग्नस्य भुक्तायेनवांशास्तैदिग्भिर्निघ्नाराम्भैर्भक्तास्त्रिंशदंशाभागा भवेयुः तद्यथा
यथोक्तविधिनालग्नशुद्धिं नवांशशुद्धिं च विचार्य अजमृगाननतौलीत्यादिवक्ष्यमाणा तया लग्नादिममंशमारभ्यइष्टनवांशात्पूर्वे
नवांशाभुक्तास्तेदशघ्नास्त्रिभक्तास्तल्लग्नराश्याद्योभागाः स्युरितिराश्यादिलग्नं स्यात् ६ अथाभ्यां कालमाह रात्रौ भानुर्भार्धयुक्
षड्राशियुक्तः दिवातु यथास्थित एव सायनांशः अयनांशसहितो वा रात्रौ च अर्थाल्लग्नं च सायनांशं कार्यं तन्वर्कांशाः क्रमेण भुक्ता
भोग्याः पृथक् स्वोदयघ्नाः त्रिंशद्भक्ताः पलादि स्यात् अर्थाद्भुक्तं भोग्यं च तद्यथा तनोर्लग्नस्य भुक्तभागा लग्नोदयेन गुणिताः त्रिंशद्भ

संक्रान्त्यंनवीसरैर्येयुतं दाल्लग्नं भानुर्भादिमेषादिमिश्रं भक्ताराम्भैर्लग्नभुक्ता नवांशादिग्भिर्निघ्नास्त्रिंशदं
शा भवेयुः ६ रात्रौ भानुर्भार्धयुक्सायनांशस्तन्वर्कांशाः स्वोदयघ्नाः पृथक्ते त्रिंशद्भक्ता भुक्तभोग्याः फलादि
नादृक्कालो मध्यगः स्वोदयाद्यः ७ तत्कालार्कन्यूनलग्नांशपिंडो भक्तः पंचसोपिभिर्भुक्तहोराः ॥ ८ ॥

क्ताः फलादि भुक्तं स्यात् एवमर्कस्य भोग्यभागाः अर्कोदयेन गुणिताः त्रिंशद्भक्ताः पलादिकं भोग्यं स्यात् दिनितादृक्कालः स्वोदयाद्यो म राम
ध्यगः स्यात् तदिव दृश्यते सौ तादृक् स चासौ कालश्च तादृक्कालः पलादिभुक्तभोग्यकालः स्वोदयैर्मध्यवर्तिभिरुदयैराढ्यः ॥ ४५
ध्यगः लग्नार्कयोर्मध्यवर्ती कालः स्यात् ७ अथ लग्नकालमुत्काललग्नात्कालहोरामाह स चासौ कालश्च तत्कालः तत्कालिकं
तेनन्यूनं तच्च तल्लग्नं च तस्य अंशाः तेषां पिंडः समूहः पंचसोपिभिः पंचदशभिर्युक्ताः भुक्तहोराः स्युः तदीशाः तासां होराणामी

णाभास्वदादयोवरमारभ्यसंख्यायेरन्गणयेरन् कर्मणिलिङ् भास्वान्सूर्यः शुक्रः प्रसिद्धः ज्ञोबुधः इंदुश्चंद्रः शौरः शनिः आर्योगु-
रुः भौमः प्रसिद्धः ८ अथपापहोराभंगमाह सौम्यग्रहहोराशुभापापहोराशुभेतिस्पष्टमर्थसिद्धंच सौम्यवर्गैः अधिकेतस्मिन्सौम्य-
वर्गाधिकेलग्नेसतिक्रूराः पापहोरामोघानिःफलाःस्युः गृहादीन्षड्वर्गान्वक्ष्यति तत्रचतुरधिकाः सौम्यवर्गाश्चेत्स्युस्तदासौम्यवर्गाधि-
कत्वमितिस्पष्टं किंचवारेरात्र्यांचक्रूराहोरामोघाःस्युः सौम्यवारेसेदारात्रौक्रूरवारेसत्यपीत्यर्थः तथाचगर्गः क्रूरवारेक्रूरहोरा-
शस्ताइहमंगले नातिदुष्टाशुभेवारेरात्रौस्वल्पफलामतेति वैद्यनाथः तेलग्नेसच्चतुर्वर्गेदुष्यतेकालहोरयेतिसत्तद्भंसंगेन

भास्वच्छुक्रज्ञेंदुसौरार्यभौमाः संख्यायेरन्वारतस्तेतदीशाः ८ होराः क्रूराः सौम्यवर्गाधिकेसुर्लग्नेमोघाः
सौम्यवारेचरात्र्यां पापारिष्टंनिःफलंशक्तिभाजोस्यात्षड्वर्गेलग्नगेसद्ग्रहाणां ९ ॥ ६ ॥

अन्यस्यपापजनितस्याशुभफलस्यभंगमाह पापारिष्टमिति पापारिष्टंपापग्रहजनितमरिष्टं अशुभंनिःफलंस्यात् कस्मिन्सति
शक्तिभाजांवलिनांसद्ग्रहाणांसौम्यग्रहाणांषड्वर्गेलग्नगेसति ९ एवंकालहोराणांमतांतरमुक्त्वा सर्वसंमतंवक्ष्यन् तदर्थंतावद्वा-
रप्रवृत्तिमाह उपजातिका चरार्धंदेशांतरंचग्रहगणितेप्रसिद्धं तत्रचरार्धमेवचरमुच्यते देशांतरयोजनानिस्वचतुर्थांशोमि-
तानितत्पलानिस्युः तेषांचरार्धपलानांदेशांतरपलानांचक्रमेणायुग्वियोगौकार्यौ कस्मिन्सति याम्योत्तरगोलगेर्केसतिया-
म्यगोलेयोगः उत्तरगोलगेवियोगइत्यर्थः तत्रयोगेसतितैःपलैर्दिनवारकर्तुःप्रवृत्तिरव्युदयात्पुरापूर्वंस्यात् वियोगेसतिप

पश्चाद्भवेत् अतो दक्षिणगोले सदा पूर्वं वारप्रवृत्तिः उत्तरगोले पश्चादिति दिनस्य दिवसस्य वारस्य कर्त्ता वारस्वेतियावत् इय मुक्ता वारप्रवृत्तिरसंगता वासनाबाह्यत्वात् सप्तर्षिवाराहादिवचनविरोधाच्च तथाहि लंकायां सूर्योदयात्सर्वदेशे किल वार प्रवृत्तिः लंकायां यत् क्षितिजं तदन्यदेशे उन्मंडलं उत्तरगोले स्वक्षितिजादूर्ध्वमुन्मंडलं दक्षिणे त्वधः तदंतरं चरमेव अत उत्त रगोले मध्यरेखायां स्वोदयादुपरि चरपलैर्वारप्रवृत्तिः दक्षिणे तु पूर्वं मध्यरेखास्वदेशोदययोरंतरे देशांतरपलामितैः पलैः रेखा याः पश्चिमदेशे ऊर्ध्वमुदयः पूर्वदेशे त्वधः अतोऽनेन विधिना चरदेशांतरयोः संस्कारवशादूर्ध्वमधो वा वारप्रवृत्तिरिति अतः

चरार्धदेशांतरयुग्वियोगो क्रमेण याम्योत्तरगोलगेऽर्के योगे पुरा रव्युदयाद्वियोगे पश्चात्प्रवृत्तिर्दिनवारकर्तुः १०

बोक्तं सिद्धांते अर्कोदयादूर्ध्वमधश्चेत्यादि तथा च संहितायां सप्तर्षिभिश्च उत्तरदक्षिणाच्चरदलहीनयुतानाडिकाः रवेरुदयात् प्राक्पश्चा नरदेशांतरयोजनस्वाष्टांशकेनायीत्यादि अन्यैश्च सौम्ये गोले सवितुरुदयादित्यादि अत उक्तमनेन तद्गोलन्यासेनो विरुद्धं सप्त र्षिप्रमुखवचनैर्विरुद्धं अथ वक्तव्यमस्य पाठांतरमस्तीति चेन्न यतः सर्वत्राप्ययमेव पाठः अथ त्वं वक्तव्यमस्यार्थांतरमस्ती ति चेत्तदपि न उक्तानार्थत्वे सत्यर्थांतरसंभवात् अर्थांतरं भविष्यति चेद्विचारयंतु नास्त्येवार्थांतरं अथ वक्तव्यमसौमध्य रेखायाः पश्चिमदेशनिवासी भविष्यति अतस्तेन स्वदेशाभिप्रायेणोदमुक्तमिति तदपि न उत्तरगोले देशांतरपलेभ्योऽधि केचरे सति व्यभिचारात् तथाहि तदा वयोः संस्कारे क्रियमाणे पश्चिमदेशांतरस्यावशेषत्वात्तुल्यैः पलैः पूर्वमेव वारप्र

वृत्तिर्भाव्या असौ तु वदति वियोगेपश्चादिति अतः कुत्रापि नालंबने सतीदं वक्तव्यं अनेन पश्चिमदेशनिवासित्वात्स्वदेशा
भिप्रायेणोक्तमुक्तं यन्नूतेरगोले अल्पचरे सति व्यभिचर्यते तत्कदाचित्कत्वात्तेनोपेक्षितमिति मंतव्यं १० अथ होरानयनं
दुंद्रवज्रा वारप्रवेशो द्वारप्रवेश मारभ्य द्विघ्नाश्च ता इष्टनाड्यश्च ताभ्यः शरैः पंचभि यल्लब्धं तेन तुल्याः काल
रेशाः स्युः अपि सतां तद्द्योतने प्रागुक्तहोराः स्युरेता अपि भवंतीत्यर्थः तासु होरासु संख्यागणना उक्तवत्स्यात् भास्वच्छु
क्रज्ञेन्या दिना अनयोर्मतयोः फलितमाह यदीतियशुभाभ्यां प्रकाराभ्यां क्रूरा होरा भवेत् कुवर्गः पापवर्गोऽधिकश्च

द्विघ्नेष्टनाडीशरलब्धतुल्या वारप्रदेशादपि कालहोराः संख्योक्तवत्तास्वयथशुभाभ्यां क्रूरा कुवर्गो
श्चेत्तदातिदोषः ११ गंडांतेष्वपि वैधृतावुभयतः संक्रांतियामद्वये यामार्धं व्यतिपातविष्टिकुलि कैर्भग्नं न विलग्नं जगुः ॥

तदातिदोषो महादोषो भवेत् तदा तल्लग्नं सर्वथा त्याज्यमेवेत्यर्थः ११ अथैतत्प्रसंगेना
न्यांश्च महादोषानाह शार्दूलविक्रीडितेन गंडांतानि त्रिविधानि मूलवैधृतवरीयसामित्यादिना वक्ष्यमाणानि वैधृतः स
प्तविंशो योगः संक्रांतेः सकाशाद्यामद्वये उभयतः संक्रांतिकालात्प्राक्पश्चाच्च षोडश घटिकास्वित्यर्थः यामार्धं अर्धया
मः स तु शास्त्रांतरोक्तः मनीषिणोर्धप्रहरा द्वितीयादित्यादिना व्यतिपातः सप्तदशो योगः विष्टिर्भद्राख्यं सप्तमं करणं कुलि
कोऽनंतरमेवोक्तः एतैर्गंडांतादिदोषैर्भग्नं विलग्नं जगुर्मुनयः एष्वन्यतमे दोषे सति लग्नभंगः स्यादित्यर्थः अत्र कुलिक

वि॰वृ॰ माहद्विघ्नाइति द्वाभ्यां द्वाभ्यामूनाद्विघ्नाः मनवश्चतुर्दश अर्कतः सूर्यमारभ्य कुलिकिनो मुहूर्ता भवंति कुलिकोस्तियेषां मु॰
टी॰ ते कुलिकिनः रवौ चतुर्दशो मुहूर्तः कुलिकश्चंद्रे द्वादशो भौमे दशमे इत्यादि निशि तु व्येकाः रवौ त्रयोदश चंद्रे एकादशे इत्यादि। ८
४७ दिनस्य रात्रेर्वा पंचदशांशो मुहूर्तः प्रसिद्धः अथैतत्प्रसंगेनान्येषां वारादिदोषाणां विषयमाह त्याज्या इति ये मयात्र उक्ता
दोषाः तेभ्यः परे ये तिथ्युडुवारजा दोषाः खशादीन्विना नत्याज्याः आदिशब्देन हूणवंगानां ग्रहणं तिथिश्च उडुश्च वारश्च तेभ्यो
जातास्तेन था तत्र तिथिजा दग्धतिथ्यादयः नक्षत्रजा उपग्रहादयः वारजाः कंटककालवेलादयः ते खशादिष्वेव वर्जनीया ना

द्विघ्नूनामनवोर्कतः कुलिकिनो व्येका मुहूर्ता निशि त्याज्यास्तिथ्युडुवारजाश्च न परे दोषाः खशादीन्विना
१२। राश्यंशाः शशिभूगुणेक्षणाहतास्तिथ्यभ्रभूदिक्शरैर्भक्ता भार्धदृकाणनंददिनकृद्भागा ग्रहं

न्यत्रेत्यतोत्र नोक्ता इति ये त्वत्रोक्तास्ते सर्वदेशे त्याज्या इत्यर्थः उक्तं च तिथ्युडुदिनपतिजाता योगा ग्राह्या मुहूर्णखशांव ((यस्य यत्
गइत्यादि यद्वा तिथिश्च उडु च तिथ्युडु इति तिथ्युडु च वारश्च तिथ्युडुवाराः तेभ्यो जातास्तेन था तिथिवारजा नक्षत्रवारजाश्चेत्यर्थः उ राम॰
क्तं च श्रीपतिना विरुद्धयोगास्तिथिवारजाता इत्यादि तिथिवारजाः संवर्तकादयः उडुवारजाः मृत्युयोगकालदंडादयः तत्र के मृत्यु। ४७
योगं सर्वदेशे त्यजेत् तद्वाक्यं च सर्वदा सर्वदेशेषु मृत्युयोगं विवर्जयेदिति १२ अथ लग्ने षड्वर्गशुद्धिमाह शार्दूलविक्रीडितेन रा
शेः अंशाः राश्यंशाः राशिभुक्तांशाः राशीन्संत्यज्य अंशा ग्राह्या इत्यर्थः ते चतुर्षु स्थानेषु क्रमेण शशीभूगुणेक्षणाहताः १।१।३।२

ई स्तणे द्वौ शेषास्त्वष्टाः निघ्यभ्रभूदिक् शरैर्भक्ताः २५।१०।१०५॥ अभ्रभुवोदशशेषाः प्रसिद्धाः लघ्वानिभार्धोदयोवर्गाः स्युः
भार्धं होरा दृक्काणो द्रेष्काणः नंददिनकृद्भागोनवांशद्वादशांशौ एवंचत्वारोवर्गाः यस्य गृहस्य यहृहंतन्नस्यैव अयमेकोगृहा
व्यः अथत्रिंशांशाः समराशौसितोदीनांपंचादयस्त्रिंशांशाः त्रिंशतः पूरणास्त्रिंशाः शादंतविंशातेर्श्चेतिडप्रत्ययः त्रिंशांश्चते
अंशाश्चत्रिंशांशाः तद्यथासमराशावाद्याः पंचभागाः शुक्रस्यततः सप्तबुधस्यततोष्टौगुरोः ततः पंचशनेः ततः पंचभौमस्येति ओ
जर्क्षेषुविषमराशिषुव्युत्क्रमात् भागानामधिपतीनां चतद्यथा आद्याः पंचभौमस्येति ओजर्क्षेषुविषराशिषुव्युत्क्रमात्॥

त्रिंशांशाः सितसौम्यजीवरविज क्ष्माजन्मनांव्युत्क्रमादोजर्क्षेषुशराश्वसंयमकृतः पंचेतिषाड्वर्गिका १३॥
कुजकवींदुजचंद्ररवींदुजाः सितकुजेज्ययमार्कजसूरयः भवनपालवपाश्चनदादयस्त्वजमृगाननतौलि

((कुलीरकाः १४

भागानामधिपतीनांच तद्यथाआद्याः पंचभौमस्यततः पंचशनेःततोष्टौगुरोः ततः सप्तबुधस्यततः पंचशु
क्रस्येति अत्रसितादीनामेवोत्क्रमइतिनव्याख्येयं गर्गादिवचनविरोधात् इतीयंषड्वर्गिकास्यात् षण्णांवर्गाणांसमाहारः
षड्वर्गीसैवषड्वर्गिका १३ अथसौम्यपापवर्गज्ञानायराश्यधिपानाह कुजेति विलंवितंकुजोदयोभवनपाराश्यधिपाः स्युः मेषादी
नां द्वादशराशीनांकुजादयोद्वादशक्रमेणाधिपाःस्युरित्यर्थः सर्वगृहाधीशाः अथनवांशस्य स्वतेलवपानवांशपतयश्चस्युः
नवांशराशेरप्यधिपाःस्युरित्यर्थः तमेवनवांशराशिमाह तदादयइति तस्यनवांशस्योदयः प्रथमाः अजमृगाननतौलि

कुलीरकाः स्युः मेषराशौ प्रथमनवांशो मेषस्य वृषे मकरः मिथुने तौली: कर्के कर्क एवं पुनः सिंहे मेषः कन्यायां मकर इ
त्यादि एवं प्रथमनवांशं ज्ञात्वा तमारभ्य प्रागानीतभुक्तनवांशान्गणयित्वा वर्तमानो नवांशराशिः स्यात् तदधिपो नवां
शाधिप इति १४ अथ होरादीनाह वसंततिलका समे समराशौ अङ्गखगयोर्होरे स्तः अङ्गश्चंद्रः खगः सूर्यः खगः पूषा
गभस्तिमानित्यभिधानात् विषमे राशौ अर्कमेरा होरे स्तः प्रागानीतलब्धवशात्समे राशौ प्रथमा होरा चंद्रस्य द्वितीया सूर्यस्य
विषमे प्रथमा सूर्यस्य द्वितीये दोरित्यर्थः अथ द्रेक्कोणाधीशाः द्रेक्काणकाइति स्वगृहात्प्रथमपंचनवेश्वराणां द्रेक्काणाः स्युः

होरे समेऽङ्गखगयोर्विषमे रवींद्वोर्द्रेक्काणकाः प्रथमपंचनवेश्वराणां स्युर्द्वादशांशपतयः स्वगृहा
च्छुभानि भानि ग्रहाश्च निजमित्रशुभांशभाजः १५ भजेन भुक्त्या नरभुक्तियोगेः ॥ ॐ ॥

तद्यथा यदा शून्यं लब्धं तदा प्रथमो वर्तमानः यदा एकं तदा द्वितीय इत्यादि अनेन विधिना प्रथमो द्रेक्काणो राश्याधिपस्यैव ।
द्वितीयस्तस्माद्राशेः पंचमाधिपस्य तृतीयो नवमराश्यधिपस्येति अथ द्वादशांशाः स्वगृहात् द्वादशांशपतयः स्युः स्वीयलब्धव
शात् द्रेक्काणवत् त्रिंशांशानां स्वामिन एवोक्ताः एवं षड्वर्गाधीशा उक्ताः अथैषां शुभत्वमाह शुभानीति शुभानां सौम्यग्रहाणां
भानि राशयः शुभानि स्युः यद्वर्गस्य राशेरधिपः शुभः स वर्गः शुभः स्यादित्यर्थः न केवलं राशिः किंतु ग्रहाश्च निजमित्रशुभांश
भाजः शुभः निजश्च मित्रं च शुभश्च तेषामंशो नवांशः तं भजंति तेन यथा स्वसुहृच्छुभानां नवांशस्थिता इत्यर्थः वर्गराशेरप्यधि

पः एवंविधस्तदैववर्गः शुभ इति भावः २५ अथ तिथ्यादीनां संधिकालमाह उपजातिका षष्टिगुणान् गुणाग्नीन् पृथक्पृथक्
भुक्त्यंतरभुक्तियोगैः भजेत्क्रमेण तिथीभयोगांतरनाड्यः स्युः भुक्त्यंतरं च भुक्तिश्च भुक्तियोगश्चेति तथा चंद्रार्कयोर्भुक्त्यंतरभु
क्तिश्चंद्रस्यैव योगश्चंद्रार्कभुक्तियोगः तद्यथा त्रयस्त्रिंशतं षष्ट्यासंगुण्य त्रिधा संस्थाप्य क्रमेण चंद्रार्कभुक्त्यंतरेण चंद्रभुक्त्या चं
द्रार्कभुक्तियोगेन च विभज्य तिथिनक्षत्रयोगानां संधिनाड्यः स्युरित्यर्थः तिथिशब्दस्य स्त्रीलिंगेपि सत्वात्कृदिकारात् ङीषिकृतेति
थीति सिद्धं उक्तं च सिद्धांते शशितनुविकलाभ्य इति एता एवं मध्यगत्या आनीय वक्ष्यति नक्षत्रयोगेत्यादिना चंद्रार्कयोः संक्र।

पृथक्पृथक् षष्टिगुणान् गुणाग्नीन् तिथीभयोगांतरनाड्य इंदोः पुण्या रवेः पुण्यतमास्त्विमास्युः २६
कुजादिकानामपि विंवलिप्ताः खषड्गुणाः स्वस्वजवेन भाज्याः २७ मणकालमाह इंदोरिति इमान्यनेनैव प्रकारेण साधिता

अंतरनाड्यः इंदोः पुण्या रवेस्तु पुण्यतमाः स्युः एतदुक्तं भवति रवेश्चंद्रस्यापि विंवत्रय स्त्रिंशत्कलाः अतोनयैव रीत्या त्रयस्त्रिंशतं षष्ट्या
संगुण्य स्वस्वगत्या विभज्य अंतरकालः स्यात् स चंद्रस्य पुण्यः रवेस्त्वतिशयितपुण्यः अयं कालो नक्षत्रयोराश्योर्वा क्रांतरालेभवेत्
संक्रमेणकाल इत्यर्थः २६ अथ भौमादीनामपि संक्रमणकालमाह उपजातिका कुजादिकानां भौमादीनामपि प्रागुक्ता विंवलि
प्ताः खषड्गुणाः स्वस्वजवेन स्वस्वगत्या भाज्याः संक्रमणांतराल कालो नाड्यादिको भवेत् अत्र विंवनिमध्यान्येवोक्तानि तेभ्यः
कृतो यं संक्रमणकालः सोपि मध्यो भवेत् तत्स्फुटभुक्तिविंवैः स्फुटः स्यात् तेषां भौमादीनां ग्रहगणितोक्त्या स्फुटभुक्तिभिः स्फुटविं

वैभ्यस्फुटकालः स्यात् एषांसंधिकालादीनामर्धेन दंताद्भयत्रेत्यर्थसिद्धं १७ अथऋत्वादिसंधीन्विवक्षुःऋत्वानयनंतावदा
ह उपजातिका एकगृहाधिकस्यएकराशियुक्तस्यसायनांशस्यअयमांशसहितस्यरवेर्यदंशवृंदंभासमसमूहोभवेत् तद्रा
शिद्वयभागैः षष्टिभिस्तष्टं भक्तंयल्लब्धंतेनवसंतादृसंतमारभ्यऋतवोभवंति मृगादिराशिद्वयभोगादित्युक्त्यामीनादौवसं
तारंभः अतउक्तं एकगृहाधिकस्येति यावद्भिरंशैरयनच्युतिः स्यादित्युक्त्वा नृसायनस्येत्युक्तं एवंकेचिदृत्वयनादीनिसा
यनार्कादिष्वंति तदभिप्रायेणोदग्रुक्तं केचित्तुकेवलादेवउभयादपिकेचित्कालनिर्णयकारादयः १८ अथऋत्वादीनांसंधि

नाड्यादिकःसंक्रमणांतरालंकालःस्फुटस्तत्स्फुटभुक्तिविंवैः १७ रवेर्भवेदेकगृहाधिकस्ययदंशवृं
दं खलुसायमस्य यदत्रराशिद्वयभागतष्टंलब्धंवसंतादृतवोभवंति १८ तत्संधयोगांगघटीसमाः
स्युर्द्विसंगुणाश्चेद्विषुवायनीयाः ससंधिसंधिः खलु यत्रशेषः शून्यंभवेदेषविशेषपुण्यः ॥ १९ ॥

कालमाह तेषांऋतूनांसंधयः अंगांगघटीसमाः षट्षष्टिघटिकातुल्याः स्युः तदंतास्त्रयस्त्रिंशद्घटिकाः पूर्वेपश्चाच्चेत्यर्थः चे
द्विषुवायनीयास्तर्हि द्विसंगुणाः द्वात्रिंशदधिकशतघटिकाइत्यर्थः विषुवंच अयनंचविषुवायने तयोरिमाविषुवायनीयाः वि
षुवंमेषतुलासंक्रमौ अयनंकर्कटमकरसंक्रमौतत्पूर्वेपश्चाच्चषष्टिघटिकाइत्यर्थः यत्रकालेशेषशून्यंभवेत् राशिद्वयभाग
तष्टमितिक्रियमाणेयदाशून्यंशेषंभवेत् एकस्यानोन्यस्यादित्यर्थः ससंधिसंधिर्भवेत् संधेरपिसंधिः संधिसंधिः एषका

लोविशेषपुण्यः अतिशयितपुण्यः अत्रसंधिसंधिः पुण्योविशेषग्रहणात्संधिकालेसाधारणपुण्यमस्तीतिसूचितं १९ अथैषांसंधीनां
फलमाह उपजातिका संधौतिथिनक्षत्रादिसंधिकालेपुरंध्रीस्त्रीशोकंसतिप्राप्नोति यदिसंधिसंधिस्तदापुरंध्रीवंध्यामृतप्रजावाभवे
त् अथैतत्प्रसंगेनमध्यरात्रसंधिकालयोः फलमाह वदंतीति निशीथमध्यंदिनसंधिषुऊढांविवाहितांऋतुनाविमूढां आर्तवर
हितांवात्स्यासुनयोवदंति वत्सस्यापत्यानिवात्स्याः निशीथोर्द्धरात्रः मध्यंदिनस्येतिमध्यंदिनंतेषांसंधयः तन्यविभ्रमणंसुक्तंग्रंथांत
रे मूर्तः कालोनिवसतिमहानिशायांचदिनदलेयस्मात् दशपूर्वेदशपरतस्तस्माद्वर्ज्यानिचपलानीति २० अथमूलादियो

संधौपुरंध्रीप्रचमेतिवंध्यामृतप्रजावायदिसंधिसंधिः वदंतिवात्स्याऋतुनाविमूढांनिशीथमध्यंदि
नसंधिमूढां २० मूलवैधृतवरीयसांचयत्पंचमेषुचतिथिष्ववांतरे रेवतींद्रफणिभोद्भवंतुदप्यागताद्वि
गुणमुत्सृजेत्सुधीः २१

गसंधीनांविशेषमाह रथोद्धतं मूलस्यवैधृतस्यवरीयांसस्य एषांयोगानांयत्प्रागागतं अवांतरं
यच्चपंचमेषुतिथिषुपंचमीदशमीपंचदशीषुयच्चरेवतींद्रफणिभोद्भवंरेवतीज्येष्ठाश्लेषोद्भवंतदपि आगतांदेवांतराद्द्विगुणंसु
धीः उत्सृजेत्त्यजेत् एतेषांमत्रादेतत्तुल्यंपूर्वः पश्चाच्चेत्यर्थः एतद्गंडांतसंज्ञं २१ अथतिथ्यादीनांसंधिव्यवहारार्थंमध्या
गत्यानीयपठति वसंततिलका नक्षत्रयोगतिथीनांसंधिषु एकानाडिकाक्रमेणतिथ्यष्टविंशतिपलैः सहिताउभयत्रपू
र्वंपश्चाच्चत्याज्या एकानाडिकापंचदशपलैःसहिताउभयत्रपूर्वंपश्चाच्चत्याज्याएकानाडिकापंचदशपलैःसहिता

नक्षत्रसंधिः अष्टपलैः सहितायोगसंधिः विंशतिपलैः सहितानिथिसंधिरित्यर्थः लग्नसंधिमाह कर्कालीति कर्कालिमी
नतनूनांकर्कवृश्चिकमीनलग्नानांसंधिषुदिक्पलानिदशपलानि उभयत्रत्याज्यानि एषांअंतान्पूर्वपश्चाच्चेतिशेषाणां
वृषादिलग्नानांविवरेषुसंधिषुपंचपंचपलानि उभयत्रत्याज्यानि एषसंधिरंशानामपिज्ञेयः लग्नोपलक्षणात् २२ अथ।
माससंधिमाह उपजातिका अमावास्यातिथिः पार्श्वयोस्तिथिद्वयेनसमंसहसार्द्धंसाकंसमंसहेत्यमरः चतुर्दश्या प्रतिपत्सहि
तेत्यर्थः मांगल्यंनउपादधातिनधारयति अत्रहेतुमाहलोकमितियस्मात्कारणात्तत्रतस्मिन्तिथित्रयेलोकंपृणश्चंद्रमाः

नक्षत्रयोगतिथिसंधिषुनाडिकैकातिथ्यष्टविंशतिपलैःसहितोभयत्र कर्कालिमीनतनुसंधिषुदिक्प
लानित्याज्यानिशेषविवरेष्वपिपंचपंच २२ अमातिथिःपार्श्वतिथिद्वयेनसमंनमांगल्यमुपादधा
तिलोकंपृणास्तत्रतिथेःप्रणेतायस्मान्नपीयूषवपुर्वपुष्मान् २३ ॥ लोकंपृणाति असौलोकंपृणः पृपालनपू
रणयोः कर्त्तरिशः खित्वात्नांलोकस्यपृणोऽइतिमुम् तिथेःप्रणेताप्रवर्त्तकः पीयूषवपुरमृतशरीरःवपुष्मान् प्रशस्तंवपुर्य
स्यासौवपुष्मान्नास्ति चतुर्दश्यादिषुकृष्णापक्षेएवंविधस्यचंद्रस्य अस्तंगतत्वादित्यर्थः चंद्रोह्यमृतकिरणोलोकाप्याय।
कस्तिथिप्रवर्त्तकइति अन्यैश्चंद्रवाल्यत्वात्द्वितीयानिषिद्धा २३ तन्मतंनिषेधयन्किंचिद्विशेषमाह उपजातिका।
अयंचंद्रमाप्रतिपत्समासोऽप्रतिपदंतेउदेतिचसामीप्येसप्तमी प्रतिपदंतेतत्समीपेइत्यर्थः दृक्कर्मादिसंस्कारवशात् ।

सउदितश्चंद्रः कृशोपिवर्धिष्णुतयाहेतुनाप्रशस्तः वर्धनशीलोवर्धिष्णुः तस्यभावस्तथायथाशिशुर्वर्धमानतयाप्रशस्
तेनदृष्टश्चंद्रोपीत्यर्थः अतोस्यबालत्वदोषोनास्तीतिसूचितं तस्यापिविशेषमाह द्वीपेति द्विर्गता आपोयस्मिन् तद्वी
पं तस्मादन्यद्वीपंद्वीपांतरंतत्रतिष्ठतीति द्वीपांतरस्थः देशांतरदृष्ट इत्यर्थः देशांतरदृष्टश्चंद्रस्तावद्विफलः तावत्के
षांयावत्पृथ्वीनयनाध्वनीनोनास्तिपृथ्वीशब्देनतत्रस्थाजनालक्ष्यंते तेषांनयनानिपृथ्वीनयनानि तेषांमध्यामार्ग
स्तस्मिन्नलंगच्छतीति पृथ्वीनयनाध्वनीनः अध्वनोयत्खावितियलंगाम्यर्थेखः आत्माध्वानोखेइतिअतः प्रकृतिन्वंय

उदेतिचांयंप्रतिपत्समाप्तौकृशोपिवर्धिष्णुतयाप्रशस्तः द्वीपांतरस्थोविफलोपितावद्यावन्नपृथ्वी
नयनाध्वनीनः २५ नोजन्ममासतिथिभेषुनचाधिकोनेमासेतिथौचपृथुमंगलमामनंतियज्ज्ये
ष्ठगर्भजमपत्यमुपेनमेतज्ज्येष्ठेमहोत्सवमवश्यमियान्नवृद्धिम २५॥९९ द्वापृथ्वीनयनाध्वनिर्द्वनसम
र्थः पृथ्वीनयनमार्गेसमइति एतदुक्तं भवतिशास्त्रेणादृष्टश्चंद्रोदेशांतरदृष्टइदंलंकापुरेर्कस्यपदोदयः स्कंदादिना
र्धयमकोटिपुर्यामित्यादिगोलवासनयाप्रसिद्धं अतःस्वदेशभूमिस्थितैर्यावन्नदृष्टस्तावद्विफलइत्यर्थः अभ्रा
दिनातुअदर्शनेनदोषइतिप्रसिद्धमेव २५ अथजन्ममासादीनांनिषेधमाहवसंततिलकाजन्मनिमासतिथिभा
नितेषुजन्ममासिजन्मतिथौजन्मनक्षत्रेवेतिपृथुमंगलंचोलोपनयनविवाहादिकंनोआमनंतिनकथयंति नचअ

थिकोमिमासे अधिमासेसंयमासेचेति अधिकोनेति यौचदिनवृद्धौदिनक्षयेचेति ज्येष्ठमासस्यविशेषमाह यज्ज्येष्ठेतियज्ज्येष्ठगर्भज मपत्यंपुत्रःकन्यावातज्ज्येष्ठमासेमहोत्सवंचौलोपनयनविवाहादिकंउपेतंप्राप्तंसन्नदवश्यंच्छिन्नंईयात्तत्प्राप्नुयात्तज्ज्येष्ठापत्यस्यज्ये ष्ठमासे मंगलंशुभंनेत्यर्थः २५ अथैषांगुणदोषाणांविवेककर्त्तुःप्रशंसामाहरथोद्धतं इतियदुक्तंगुणागुणमयंगुणाश्च अगुणा अगुणागुणाःतैःप्रचुरंगुणागुणमयं अतींद्रीयदृशोदिव्यदृष्टारोमुनीश्वराःनिरूचिरेनिजगदुः विदितजन्मतन्मार्गःलग्नलग्न धीःदैवविन्कीर्तिभाग्भवति तच्चतन्मतं अस्यतच्छब्दस्यपूर्वेणयच्छब्देनान्वयःजन्मचतन्मतंचजन्मतन्मतेयेनासौतथा स

इत्यतींद्रियदृशोनिरूचिरेयद्गुणागुणमयंमुनीश्वराः दैवविद्विदितजन्मतन्मतःकीर्तिभाग्भवतिल ग्नलग्नधीः २६ इतिविवाहवृंदावनेलग्नषड्वर्गाध्यायोऽष्टमः ८ ॥ अथगोधूलिकाध्यायःप्राचींकु कुंमचर्चितामिवदिशंमुक्ताफलस्रग्विणींकौसुंभांशुकभासिनीमिवदिशंप्राचेतसींदर्शयन् ॥ ९ ॥

वंविधगुणदोषविचारचतुरोलग्ननिहितैकबुद्धिःकीर्तिमान्भवतीत्यर्थः २६ इतिश्रीसकलागमाचार्यवर्यश्रीकेशवसांवत्सरात्मज गणेशदैवज्ञविरचितायांविवाहवृंदावनटीकायांविवाहदीपिकायांलग्नषड्वर्गादिशुद्ध्यधिकारोऽष्टमोऽध्यायः ८ सर्वेसर्वलग्ना



नांशुद्धिमभिधायेदानींगोधूलिकलग्नविशेषशुद्धिरारभ्यते तत्रतावत्तस्यकालंदर्शयन्स्वकविताकौशलंदर्शयति शार्दूलविक्री डितेन तावत्पर्यंतमंगलग्नसुरभीरेणोः कुमार्याःकरंपाणिंगृह्णतःस्वीकर्त्तुःपुरुषस्यमंगलंभवतिसुरभीणांधेनूनांरेणुःधूलिः

सुरभीरेणुः अंगेषु लग्नाः संसक्ताः सुरभीरेणवो यस्याः सा तथा धेनुधूलिधूसरायाइत्यर्थः तावत्कथं यावद्रविः सूर्यः संध्याकुरंगी
दृशा सह करग्रहं याति कुरंग्या दृगिव दृग्यस्याः सा तथा मृगलोचना संध्येव कुरंगीदृक् संध्याकुरंगीदृक् तथा अत्र संध्या सायंसंध्येवतत्र
सुरभीरेणूनां संभवात् किं कुर्वन्सन् कुंकुमचर्चितामिव प्राचीं दिशं प्रति आत्मानं दर्शयन् इवोत्प्रेक्षायां कुंकुमेन चर्चितां मंडितां तां दृशेत्यि
जंतत्वाह्निकमेकत्वं सायंकाले प्राच्यां कुंकुमसदृशः स्वाभाविकः संध्यारागः स कुंकुममिवेत्युत्प्रेक्षा कथंभूतां प्राचीं मुक्ताफलस्र
ग्विणीं मुक्ताफलानां स्रक् मुक्ताफलहारः सोस्ति यस्याः सा मुक्ताफलस्रग्विणी तां मत्वर्थीयो विनिः अर्थान्नक्षत्रमालेव मुक्ताफल
स्रक्कामिव दर्शयन् प्राचेतसीं दिशमिव प्रचेतसो वरुणस्येयं प्राचेतसी तां प्रतीचीं इव यथार्थे यथा प्राची तथा प्राचेतसीमि

यावद्याति करग्रहं सह रविः संध्याकुरंगीदृशा तावन्मंगलमंगलग्नसुरभीरेणोः करं गृह्णतः १ उत्कर्णा
तर्णकविलोकनवल्गुवल्गत्पीनस्तनोद्घृषितदुर्धरधेनुधूलिः ॥ ११ ॥ तितेन प्राचीं दिशं प्राचेतसीं च दिशं दर्शयन्नि

ति भावः कथंभूतां प्राचेतसीं कौसुंभांशुकभासिनीं कुसुंभ्याः पुष्पाणि कुसुंभानि तैः रक्तं कौसुंभं तच्च तदंशुकं च तेन भासते सा तथा अर्था
त्संध्याराग एव कौसुंभांशुकमिति यद्वा कौसुंभांशुकमिव भासने सा तथा यावत्सायंसंध्याकाले सतादृशः संध्यारागः सुरभीरेणव
श्च दृश्यंते तावत्काले करग्रहकर्तुर्मंगलं स्यादिति तात्पर्यार्थः १ अथ गोधूलिकप्रशंसां तदधिकारिणश्चाह वसंततिलका पंच
श्लोकाः उद्ध्वीकर्णौ येषां ते उत्कर्णाः ते च ते तर्णकाश्च तर्णकावत्साः तेषां विलोकनं तेन वल्गवः शोभमानाः वल्गंति तावल्गंत्यः

वल्गानं गतिविशेषः पीना मांसला स्तना यासां ता पीनस्तनाः उद्धुत्कर्षेणाहृषिताः संतुष्टा उद्धृषिताः हर्षेर्निष्ठायां वेट्‌त्वेदुःखेन धर्तुं शक्यं तेनाः दुर्धराः उत्कर्णेन र्णक विलोकनेन वल्गा वश्चना वल्गान्यः पीनस्तना उद्धृषिताः दुर्धराश्चता धेनवश्चतासो धूलय स्ता स्तथा नाः कर्मगो धूलिकं लग्नं कर्तुं गोप पृथग्जनानां सृजत्युत्पादयति ददातीत्यर्थः गवां धूलयस्तत्र भवं तदुपलक्षितं का लेजातं लग्नं तद्गो धूलिकं गोपाः पशुपालकाः पृथग्जना हीनवर्णाः गोपादीनां गोधूलिकलग्नेन एवंविधधेन दे॰ एवंती तिभा वः अस्य माशस्त्यमाह दोषैरिति कथंभूतं लग्नं अन्यैर्महद्भिर्दोषैः अनूनं सहितमपि अयं भावः गोधूलिकलग्ने सदा सम

गोधूलिकं सृजति गोपपृथग्जनानां दोषैर्महद्भिरपि लग्नमनूनमन्यैः २ गोधूलिकेपि विधुमष्टमष

ष्ठमूर्तिं यन्मोचयंति तदयं स्वरुचिप्रपंचः ॥ ९९ मः सूर्योस्त्येव अयं महादोषः मदनमूर्तिशयइत्युक्तत्वात् एतदन्यै

र्महादोषैरष्टमभौमादिभिः सहितमपि लग्नं शुभं भवेदिति यद्येवं तर्हि केचित्षष्ठाष्टमचंद्रे सति लग्नस्य भंगमाहुस्तन्निरस्य

ति २॥ गोधूलिकेपि अष्टमषष्ठमूर्तिं विधुं यत्केचिन्मोचयंति त्याजयंति तत्तस्मात्कारणादयं स्वरुचिप्रपंच [illegible]

च अष्टमषष्ठे तयोर्मूर्तिर्देहो यस्यासौ तथा अष्टमषष्ठस्थित इत्यर्थः तद्वाक्यं त्वजामित्रं न विचिंतयेद्गृहयुतमित्यादि हित्वा

चंद्रमसं षडष्टमगतं गोधूलिकं शस्यते इति अयं स्वरुचेः स्वस्याभिरुचेः प्रपंचो विस्तारः यद्वा स्वरुच्या कृत्वा प्रपंचो व्या

मोहनं जनानां तस्मात्कुतः यस्मादिदं गोधूलिकं विवाहधिष्ण्यैः सह पंचांगशुद्धिमयमेव पंचांगशुद्ध्या प्रधानं पंचांग।

शुद्धिमयं गोधूलिके विवाहनक्षत्रेषु सत्सु पंचांगशुद्धिरेव मुख्या नन्वन्यत् लग्नशुद्ध्यादिकमिति पंचांगादीनि तिथ्यादीनि प्रसि
द्धानि तेषां शुद्धिः स्वाभाविकदोषविरहः यथा रोहिण्यादिषु विवाहे हितत्वात् न हि विवाहधिष्ण्यैरितिपौनरुक्त्यं तन्नक्षत्रस्य प्राधा
न्यात् उक्तधिष्ण्यमधिकृत्य पंचांगशुद्धिर्विलोक्येत्यर्थः एतदग्रे प्रपंचयिष्यामः एतत्कथं यस्मात्कारणादिदं गोधूलिकं सततं नि
त्यं अस्तगते समगते पतंगे सूर्ये सति भवेत् एतादृशे महादोषे गृहीते सति किं त्वन्ये षष्ठाष्टमचंद्रादय इति भावः [illegible]
भौमादयोपि निराकृताः किंच ३ इहास्मिन् गोधूलिके अंशो नवांशः स्वभर्त्रा स्वस्वामिना दृष्टयुतो नास्तु लग्नं च स्वभर्त्रा दृष्टयुतमा[illegible]

पंचांगशुद्धिमयमेव विवाहधिष्ण्यैर्यस्मादिदं सततमस्तगते पतंगे ३ नांशो न लग्नमिह दृष्टयुतं स्वभर्त्रा ॥
नाकारसौरतमसामपि संगमंगः किं चंद्रचारभयमेकमिहास्तु किं चिन्नात्र प्रमाणवचनं किमपि श्रुतं ॥

अर्कारसौरतमसां सूर्यभौमशनिराहूणां संयोगस्तेन भंगो लग्नभंगः सोपि नास्तु एवं सत्येकं चंद्रचारभयं किमस्तु चंद्रस्य चारस्तस्मा
द्भयं हित्वा चंद्रमसं षष्ठाष्टमगतमिति एतदेकं कथमस्त्विति अपि तु तदपि नास्तु नन्वत्रागम एव प्रमाणमिति चेत्तत्राह किंचे
ति किंच अन्यच्च अत्रास्मिन् चंद्रचारविषये वो युष्माकं प्रमाणवचनं किमपि न श्रुतं अस्मिन्विषये यद्वाक्यं प्रमाणीकर्तव्यं
तादृशं महर्षिसंमतं वाक्यं नास्तीति भावः ४ न ह्यत्र किं विलोक्यमिति आह तद्गोधूलिकं शनौ शनिवारे सार्कं कार्यं दृश्ये रवौ
सतीति चित्रशिखंडिनः सूनौ गुरुवारे विरविकार्यं विगतो रविर्यस्मिन् न हि रवि अस्तंगते अर्के सतीति कस्मात् कुलिकयाम

वि·वृं· दलोपलंभात् कुलिकस्य यामदलंचतयोरुपलंभः प्राप्तिः शनौ हि रात्रौ प्रथममुहूर्ते कुलिकः अतः सार्कं गुरौ तु अष्टमयामार्धं अ·
टी· अन्तो विरवौ इति केवलमिदमेव पंचांगमध्ये वारदोषसद्भावात् ननु अन्यदितिरूननत् किं तत्राह प्रायेणेति संकरेण जातिसंकरेण भ ९
५३ वंतीति संकरभुवः तेषां हीनवर्णानां करपीडनं प्रायेण बाहुल्येन अशुभक्षेपक्रूरक्षणेषु शुभकृत्स्यात् क्रूरक्षणं च पूरुषस्य
क्षपक्षौ अशुभौ च तौ क्षपक्षौ च तेन तथा क्रूरश्चासौ क्षणश्च स तथा अशुभक्षेपक्षौ च क्रूरक्षणश्च तेन तथा एतदुपलक्षणा
दुष्टवारयोगादिष्वपि शूद्रेष्वपि विहीनवर्णानां पाणिपीडनं शुभं किं पुनः पंचांगशुद्धावित्ति भावः तथा च शौनकः अंत्या
नामशुभर्क्षेइत्यादि ५ यदुक्तं सार्कमित्यादि तत्परिमाणमाह अत्रास्मिन्नगो धूलिके यस्मात्कारणादुभयत्र अर्धास्त

सार्कं शनौ विरवि चित्रशिखंडिसूनौ तत्केवलं कुलिकयामदलोपलंभात् प्रायेण संकरभुवामशुभर्क्षप

मयात्पाग्पश्चाद्व घटिकादलमिष्टमाहुः तत्तस्मात्कारणादंबरमणेः ११ क्षक्रूरक्षणेषु शुभकृत्करपीडनं स्यात् ५
सूर्यस्य अर्धविंबोपि कालो न ग्राह्यः अर्धविंबकाले यस्मिन्सतु यातर्हि तद्वाचकवाक्यानां अर्धोदिते धास्ते इति सूर्ये वि·द·
शंगतइत्यादीनां गतिमाह कालार्गलेति इयं तपनार्धविंबवेलाव्यवस्थितिः कालार्गला नियतैयमुनिभिः रचैयाबभूवे अ तम·
रचिणिजंताद्वृत्तिः कर्मणि लिटि भुवोनुप्रयोगः तपनस्य अर्धविंबं तस्य वेला कालः तस्य व्यवस्थितिरवस्थानं काल ५
स्य अर्गला तस्या नियतिर्नियमः इयमर्धविंबात्मिकावेलाव्यवस्थितिः कालमध्यनियमाय रचिता किंतु तत्पूर्वं त·

त्पश्चाच्च कालांतरमस्ति अर्धघटिकात्मकत्वांनरदर्शनादिति भावः तथाचाहुः दिनांतेसूर्यविंबार्धपूर्वंपश्चाद्भदीदलं कालार्गलेववे लायांधात्रीह्यूहायनिर्मितेति अत्रगोधूलिकेपिविधुमष्टमषष्ठेत्यादियदुक्तंग्रंथकृतातत्सम्यग्विचारपदवींनाधिरोहति तथाहियदु क्तोत्रहेतुः पंचांगशुद्धिमयमेवविवाधिष्ण्येरित्यादिना तत्रपृष्टतेकेयंपंचांगशुद्धिरिति पंचांगानितिथ्यादीनिप्रसिद्धानि नारद सिष्ठादिभिः पंचांगशुद्धिविरहदोषस्त्वाद्यः इत्यादिनामहादोषप्रकरणेभिहितानि तेषांशुद्धिर्दोषविरहः दोषोद्वि[illegible] गंतुकश्चेति यस्मिन्कर्मणियदभिहितंनतिथ्यादिकंतस्मिन्प्राकृतिकोदोषः यथाविवाहेदर्शव्यतिपातभरण्यादौ आगंतुकोग्र हादिजनितः यथातिथौदग्धत्वं नक्षत्रेपापवेधादिकमिति अतः पंचांगानांप्रकृतिकदोषएवात्रशुद्धिः नत्वागंतुकदोषविर

अत्रोभयत्रघटिकादलमित्यमाहुर्ग्राह्यस्तदंवरमणेरपिनार्धविंबः ॥

हः तस्ययोगकरणयोरनभिधानात् अपिचशुद्धिशब्देन आगंतुकदोषविरहेउच्यमानेवारदोषःखार्जूरिकसमांघ्रिभमित्या दिनारदादिपठितेषुदोषेषुपौनरुक्त्यापत्तिः एकविंशतिपरिगणनाया असंभवश्चतस्मात्पंचांगानांप्राकृतिकदोषविरहएव शुद्धिरितिनिश्चितं अतएवंविधायांपंचांगशुद्धिस्तन्मयमेवगोधूलिकंइत्युक्तंभवति उतयदीदृशंब्रूषे पंचांगशुद्धिमयमेवविवा ह धिष्ण्येरिति वदतोयमाशयः विवाहविहितनक्षत्रेसतिपंचांगानांग्रहादिजनितदोषाभावलक्षणाशुद्धिर्विवक्षिता तद पिनयोगकरणयोस्तस्यासंभवात् यथासंभवमितिचेत्तदपिन पंचपदस्यवैयर्थ्यात् अतः शुद्धिशब्देनप्राकृतिकदोषाभावः

वि·वृं· स्वी कर्तव्यस्तर्हि पंचांगशुद्धिवाद्यैः सार्कं शनावित्यादिना कुलिकार्धयामौ कथं त्यज्येते वारदोषादिति चेन्न नारदवसिष्ठा अ·
टी· दिभिः पंचांगशुद्धिविरहइत्यादि पठितदोषेषु वारदोषस्य पृथग्ग्रहणात् तर्हि कुलिकं क्रांतिसाम्यं चेत्यागमबलात् कुलिका ९
५४ र्धयामौ त्यज्येते यद्येवं षष्ठाष्टमचंद्रेणा किमपराद्धं सोप्यागमबलात्त्यज्यते नात्र प्रमाणवचनं किमपि श्रुतमपि चेत्तद्दीपिन य
त आगमप्रमाणवाक्यानि संत्येव षष्ठाष्टमे मूर्तिगते च चंद्रे गोधूलिके मृत्युमुपैति कन्या कुजेष्टमे मूर्तिगतेथ वास्ते सुरस्य नाशं।
प्रवदंति गर्गाः धिष्ण्यं क्रूरयुतं त्याज्यं मूर्तौ षष्ठाष्टमे चंद्रं कुजं रंध्रास्तलग्नगं विनारंध्रं शुभैर्युक्तं गोधूलं शुभदं भवेदित्यादीनि एता
न्येव बहुसंमतानीति चेन्न दीपिन मत्याख्येयः पाक्षिकोपीह दोषइत्युक्तत्वात् किं पुनर्बहूक्तेः अतः षष्ठाष्टमचंद्रादयो गोधूलिके।

कालार्गलानियततये नपनार्धविंबवेलाव्यवस्थितिरियं रचयां बभूव ६ इति विवाहवृंदावने गोधूलिका

उक्तदोषास्तेपि त्याज्या इति सिद्धं ६ इति श्रीसकलागमाचार्यवर्यश्रीकेशवसांवत्सरात्मजगणेशदैव ९ ध्यायो नवमः ९॥
ज्ञविरचितायां विवाहवृंदावनटीकायां विवाहदीपिकायां गोधूलिकाध्यायो नवमः ९ अथ विवाहे मासगोचरे [illegible]
रव्यायत्ते तत्रादौ सौरचांद्रमासयोर्विचारमाह मंदाक्रांतायस्मात्कारणाच्चैत्रे मासि शुक्ल प्रतिपदि तिथौ रवेर्वासरे सर्वैर्गगन राम·
गतिभिः रव्यादिग्रहैः मेषादौ स्थितैर्भूर्भुवः स्वः प्रवृत्तिः आसीत् भूर्भुवः स्वरित्यव्ययानि क्रमेण लोकत्रयवाचकानि तथा ५४
चोक्तं भूर्लोकाख्योदक्षिणो व्यक्षदेशात्तस्मात्सौम्योयं भुवः स्वश्च मेरुः इति अतः पृथिवी सत्वल्लोकत्रयाधिष्ठितास्पष्टां लोका

त्तोप्रवृत्तिः प्रथमनिर्माणं सृष्टावभवत्कमलोद्भवेनेतिलंकानगर्यामुदयाच्चभानोरितिचयदुक्तं तत्पौषमासेमृगमुख
गतेमकरादिस्थितेभास्वतिभास्करेनासीत् तस्मात्कारणात्परिणायविधौइंदुमासश्चांद्रमासः श्रेयान् श्रेष्ठउक्तः अयं
भावः लंकायांक्षितिजगतयोर्मेषादिस्थितिचंद्रार्कयोः किललोकत्रयस्ययुगपत्प्रवृत्तिः तत्रचंद्रार्कयोः सम[illegible]त्वाच्चांद्र[illegible]
सादिः सएवमेषगतार्कत्वात्सासएवचैत्रमासः तदानीमादित्यस्यैवहोराअतोर्कवारः इत्यादिसर्वंपौषमक[illegible]दिस्थितेक[illegible]
टतेयतः सौरवर्षमासादेः प्रवृत्तिः संहिताकारैर्मकरादेरेवस्वीकृता उक्तंचमृगादिराशिद्वयभानुभोगादितिअतश्चं[illegible]

अथमासगोचरविचाराध्यायः चैत्रेमासिप्रतिपदिदिनेयोवासरेर्कस्यसर्वैर्मेषादिस्थैर्गगनगतिभिर्भूर्भु ६
वःस्वः प्रवृत्तिः सएवपौषमृगमुखगतेभास्वतिस्यान्नवासावुक्तः श्रेयान्परिणयविधौविंदुमासोस्तितस्मा



त्स्य इतिग्रंथकारोक्तिः नैतच्चतुरस्रं प्रवृत्तिकालेमेषादिगतार्कत्वात्सौरमासस्यापिप्रवृत्तेःसाफल्यकीर्तनायैव वास्तवंतुमेषा
देरेवग्रहगणितेप्रसिद्धा तथाचोक्तं दिनंसुराणामयनंयदुत्तरमित्यादि किंच प्रवृत्तिकालेचांद्रदिनवर्षादेरपिप्रवृत्तेस्तस्यापि
मुख्यत्वंकथन्नवक्तव्यंतस्मादनयायुक्त्याचांद्रमासस्यश्रेष्ठत्ववक्तुमनुचितं किंतुयुक्तंतरसंहितागमवलात् तदुच्यतेतत्रसूत्रे
णायुक्तःकालः सास्मिन्पौर्णमासीतिसंज्ञायामितिचपाणिनेरनुशासनात्पौषीत्यादिसंज्ञासौरादौनोपपद्यते तस्माच्चांद्रमास
एवमुख्य इतिअतएवाहनारदोपि यस्मिन्मासेपौर्णमासीयेनधिष्ण्येनसंयुता तन्नक्षत्राह्वयोमासःपौर्णमासीतदाह्वया

तन्यसौ शुक्लकृष्णाख्यौ देवपित्र्यौ च तावुभाविति अभिधानं च पक्षौ पूर्वापरौ शुक्लकृष्णौ मासस्तु तावुभाविति अतएव सि
द्धांतेप्युक्तं मासास्तथा च तिथयस्तु हि नाश्मानात् इति अतः सौरादौ मासप्रयोगो गौणवृत्त्या योजनीय इत्यस्माकं सिद्धांतः
तर्हि रवेर्वैसारणमुत्तरायणमिति विवाहे सौरमासाः कथमुक्ताः नाषाढप्रभृतिचतुष्टये विवाह इत्यनेन चांद्रमासा ग्रंथांत
रे उक्ताः १ अनयोर्विरोधे सति सयुक्तिकं निर्णयं वक्तुं पूर्वपक्षमाह मंदाक्रांता सुंदरीणामुपयामे विवाहे मृगयुजि मकर
गते रवौ पौषो नेष्टः मकरगतार्कस्य शुभत्वेपि अशुभपौषयोगात्स नेष्ट इति भावः ननु विपरीतं कुतो न स्यादित्यत्राह आह

नेष्टः पौषो मृगयुजि रवावादृतश्चेत्प्रवीणैश्चारुश्चैत्रोप्यजसहचरे भास्करे सुंदरीणां मांडव्याद्यैः
स्मृतशुभफलस्यास्य किं नोपयामे मीनोपि स्यादविकृतफलः फाल्गुनस्य प्रसंगात् २ ॥ ॥



तइति प्रवीणैः पंडितंमन्यैः मृगयुजि रवौ पौषश्चेदादृतः स्वीकृतः मकरार्कस्य शुभत्वात् तदा चैत्रोपि अजसहचरे मेषग
ते भास्करे सति चारुः शुभं स्यात् न चैवमस्ति किंच अस्य प्रसिद्धस्य फाल्गुनस्य मांडव्याद्यैः स्मृतशुभफलस्य प्रसंगाद्योगा
त् मीनो मीनगतार्कोपि अविकृतफलः किं न स्यात् अपितु अविकृतफल एव न विकृतं फलं यस्यासौ तेषां यथावत् शुभफ
लमेवेत्यर्थः शुभस्यापि फाल्गुनस्य योगात् दुष्टोपि मीनो दुष्टफल एवेति भावः न चाप्येवमस्ति एवं सौरप्राधान्यं स्वीकर्तु
रनिष्टद्वयं २ एवं सति सिद्धांतमाह उपजातिका यदि फाल्गुनेझषो मीनगतार्कस्तदा न निंद्यः चांद्रस्य मुख्यत्वात् एत

त्प्रसंगेनव्रतबंधेपिनिर्णयमाहमेषइति मेषोमेषगतार्कस्तुयदिवैशाखगतस्तदाननिंद्यः मेषेर्केचव्रतंननहीत्युत्तरेणुभ
स्यापिमेषस्यशुभत्वेवैशाखयोगाच्छुभत्वमितिभावः प्रकृतमाह मधाश्विनेति मधाश्विनौचैत्रमासगतौद्वौमीनमेषग
तार्कावपिवर्जनीयौ चैत्रस्यदुष्टत्वात् मीनस्तुस्वरूपतएवाशुभः मेषस्तुचैत्रयोगादिति चांद्रस्यमुख्यत्वादितिसर्वत्र
हेतुः इत्यादिवाचांद्रत्वादिवक्षिणांयुक्तिरियमेव इत्यादिकमुक्तवतांयुक्तिरियमुक्तैवेत्यर्थः ३ यदिहिचांद्रमुख्यत्वंत
दाप्युपयुक्तसौरमानेकथमुक्तमित्याशंक्याह शालिनीयदिप्रायोवाहुल्येनसौरमानंविवाहेस्वीकृतंनतदापोलिनचेत्

झषोननिंद्योयदिफाल्गुनेस्यादजस्तुवैशाखगतोननिंद्यः मधाश्विनौद्वावपिवर्जनीयावित्यादि
वाचामियमेवयुक्तिः ३ प्रायःसौरमानमिष्टंविवाहेतत्किंचांद्रमाससमाहुःफलेनयस्मात्सम्यक्
तत्फलाप्तिस्तदैक्येसौरोमासःकेवलःकिंचिदूनः ४॥ ११ मासंकिमाहुःशौनकादयःधनमानपरिभ्रष्टाचै

त्रेचात्रसमैथुनात्वसतीत्यादिना यस्मादेतौसौरचांद्रमासौविवाहेउक्तौतस्मात्तदैक्येतयोःसौरचांद्रमासयोरेकत्वेसतिफ
लाप्तिःसम्यक्परिपूर्णास्यात् केवलःसौरमासःचांद्रापेक्षयाकिंचिदूनः चांद्रस्यमुख्यत्वादित्यर्थः ५ एवंसौरचांद्रयोर्ब
लाबलमुक्त्वागोचराष्टकवर्गयोर्बलाबलमाह रथोद्धतानि ३ योषितांस्त्रीणांगुरुपतंगयोःगुरुसूर्ययोःगोचरेशोभनेस
ति गोचरविधिनागुरुबलेरविबलेचसतीत्यर्थःकरग्रहःशुभकरःस्यात् तदन्यये तस्यगोचरबलस्यान्ययेअलाभेस

ति अष्टवर्गविधिनागुरुपतंगबलेसतिमतांतरमाहसूर्यशुद्धिमिति अपरेनृणांपुरुषाणांसूर्यशुद्धिंजगुः ननुगुरुशुद्धिंगोचर
विधिनातल्लाभेअष्टवर्गविधिनेतिउक्तंचप्राक् भानुरप्युपचयेति पुरुषाणांगुरुशुद्धिस्तुञ्जनवंधस्य अतोनविवाहे शूद्रा
दीनांतुञ्जनवंधाभावाद्विवाहस्यगुरुशुद्धिःसूर्यशुद्धिश्चेति ५ नन्वत्रगोचरस्यकथंमुख्यत्वंतत्राहजातकेअष्टकवर्गफल
मेवास्तितत्रयच्चंद्रराशिफलंतदेवगोचरफलंसंहितासुपठितं अतोस्यअष्टवर्गफलस्यपरिणयेतिमुख्यताकिंनस्यात्
गोचरफलंह्येकस्माच्चंद्रराशेरेव अष्टवर्गफलंत्वष्टराशिभ्यःअतोस्याधिक्यात् परिणयेपितत्प्राधान्यंकथंनस्यादिति

योषितांगुरुपतंगगोचरेशोभनेशुभकरःकरग्रहः अष्टवर्गविधिनातदत्ययेसूर्यशुद्धिमपरेनृणांज
गुः ५ अष्टवर्गफलमेवजातकेनास्यकिंपरिणयेपिमुख्यता सत्यमुद्वहेमजन्मशास्त्रयोरन्यतामुनि
भिरेवसंस्मरे ६ क्रूरमष्टममरिष्टमिष्टदंसप्तमंशुभमुशंतिजन्मनिनेयमुद्वहनरीतिरित्यसावत्रगोच

भावःसनदर्थांगीकारेणपरिहरतिसत्यमिति जातकेअष्टवर्गफलंमुख्यमितिमन्यामहेपरि ९ रपथोरथोद्धतः ५
णयेपिमुख्यत्वेतिनसह्यामहइतिकथंउद्वहजन्मशास्त्रयोःविवाहशास्त्रजन्मशास्त्रयोरन्यता अन्यत्वंमुनिभिरेवसं
स्मरेस्मृता विवाहशास्त्रस्यजन्मशास्त्रस्यचभेदोमुनिभिरेवस्मृताइति ६ अत्रोदाहरणमाहजन्मनिजन्मकालेअष्टमं
क्रूरमरिष्टमशुभमुशंति सप्तमंशुभंशुभग्रहंइ ष्टदंशुभप्रदमुशंतिकांक्षंतिशुभयः ह्ययमुद्वहनरीतिर्विवाहमार्गेनभवति

तथाहि जन्मकालेऽष्टमः क्रूरग्रहोऽशुभः विवाहे शुभः जन्मकाले सप्तमः शुभग्रहः शुभः विवाहे त्वशुभः अतोऽनयोः शा
स्त्रयोरन्यथात्वं इति हेतोरत्र विवाहे गोचरपथो गोचरमार्गः रथोद्धतरथैः रुद्धतः अतिघृष्टः अस्य मार्गेऽन्वेषः गोचरमा
र्गः पारं पर्यागतः स्फुट इत्यर्थः रथोद्धतं वृत्तिच्छंदसोऽपि नाम सूचितं ७ इति श्रीसकलागमाचार्यवर्यश्रीकेशवसांवत्स
रात्मजगणेशदैवज्ञविरचितायां विवाहवृंदावनटीकायां विवाहदीपिकायां मासगोचरविचाराध्यायो दशमः १०
अथ भानि स्विकं भावफलमुक्त्वा योगाजमाह शालिनी चक्रस्य प्राचि अर्द्धे पश्चादर्द्धे क्रमेण क्रूराक्रूरैः कृत्वा चक्रोम

इति विवाहवृंदावने मासगोचरविचाराध्यायो दशमः १० अथ ग्रहयोगाध्यायः चक्रस्यार्धे प्राचि
पश्चात्क्रमेण क्रूराक्रूरैश्चक्रमित्यामनंति अत्रोढायाः सुभ्रुवः स्वैरिणीत्वं भ्राम्यत्युच्चैश्चक्रवृत्ति

तियोगमामनंति मुनयः स तदुक्तं भवति दशमभावभागानारभ्य चतुर्थभावभागपर्यंतं चक्रस्यपूर्वा ‹‹ तद्वृत्तिः १
र्द्धं चतुर्थभावभागानारभ्य दशमभावभागपर्यंतं पश्चिमार्द्धं तत्र चक्रस्य पूर्वार्धे यदा क्रूरग्रहाः पश्चिमार्धे सौम्यास्तदा
चक्रं नाम योगः स्यादिति अस्य फलमाह अत्रेति अत्र योगे ऊढायाः परिणीतायाः सुभ्रुवः सुष्ठु भ्रुवौ यस्याः सा सुभ्रूः त
स्या योषितश्चित्तवृत्तिः मनोवृत्तिः स्वैरिणी त्वपोंऽश्वल्पविषये चक्रवदुच्चैर्भ्रा यति चतुर्थे स्वैरिणी प्रोक्ता पंचमे वध
कीसमृतेति स्मृतिः चतुर्थे चतुर्थे पुरुषोपभोगेऽपि अल्पविषये तस्या मनोवृत्तिरतितरां चक्रवद्भ्रमतीत्यर्थः अयं

सर्वग्रहकृतोयोगः इनविलं विनानि तनुलग्नंनिमीलनमष्टमं तत्रगतैः क्रमेणाशुभाशुभैः लग्नस्थैः शुभैरष्टमस्थैः पापग्रहै
रित्यर्थः अयं ध्वजइतियोगः इहास्मिन्योगेकृतोद्वहनाद्वधूः सगुणलाभवती भवति कृतमुद्वहनंयस्याःसातथागुणैः सहव
र्तमानः सगुणः सचासौलाभश्चसोस्यास्तीति सगुणलाभवती पुनः कथंभूताइंगितैः स्वचेष्टितैः हावभावादिभिः प्रियमनोयमनो
न्मुखविभ्रमाप्रियस्यभर्तुर्मनः प्रियमनः तस्ययमनमाकर्षणंतत्रोन्मुखः विभ्रमोविलासोयस्याःसातथा विभ्रमोभ्रांतिर्विलासयोरिति
विश्वः २ अखिलानिचतानिकेंद्राणिचतेषांसमाहारस्तेनथाटच् चतुर्ष्वपिकेंद्रेषुगतैः खलखेचरैः पापग्रहैः वापिनामयोगोभ

तनुनिमीलनगैश्चशुभाशुभैर्ध्वजइतीहकृतोद्वहनाद्वधूः सगुणलाभवतीभवतींगितैः प्रियमनोयमनो
न्मुखविभ्रमा २ अखिलकेंद्रखैः खलखेचरैर्भवतिवापिरिहार्पितपुंस्करा युवतिरुज्झितकांतगृहा
वति इहास्मिन्योगे अर्पितपुंस्करा अर्पितोदत्तः पुंसेवरायकरोययासा पि गृहेजनयितुः कुरुतेकुतोत्सवान् ३ ॥
परिणीतेत्यर्थः युवतिः स्त्री उज्झितकांतगृहासती उज्झितंत्यक्तंकांतगृहंभर्तृगृहंययासातथाजनयितुःपितुर्गृहेकुरुतेत्सवान्कु
कुते कुत्सितानिकृतानिकुरुतानिकुशब्दाःतेषामुत्सवाआनंदाः ३ गगनेदशमेतोयेचतुर्थेतपोनवमेतेषुयथातथंस्थितैः शुभग्र
हैः शंखसंज्ञंयोगंभृगुमुनिर्गदति असौयोगः अशमसुखंसकलयति निघ्नंनिवध्नातिनिराकरोतीत्यर्थः केनपरिणयेनकासांपयोरुह
चक्षुषांपयोरुहंकमलंतद्वच्चक्षुर्यासांतास्तथातासांस्त्रीणांकथंभूतानांधनयशोनयशोभितनुश्रियांधनंचयशश्चनयश्चतैःशो

भतेसा धनयशोनयशोभिनी तनोर्वपुषः श्रीःकांतिः तत्र श्रीर्धनादिशोभिनी तनुश्रीर्यासांतास्तथा ४ वसंततिलका एकादशे
कुजरवीसपत्नेशत्रौषष्ठेरविजःशनिः वित्ते धने विधुःतपस्विनवमेशोषनभश्चराःकुजरविशनिचंद्रव्यतिरिक्ताः श्रेस्युःतदा
श्रीवत्सोनामयोगाः एषयोगः रूपेणारिक्तारूपरिक्तासौंदर्यहीना तामपि स्त्रियं सुखयतिकथंभूतां सौभाग्येति सौभाग्यस्य
भोगःतस्यभरोभारःतस्यभंगिःरचनातयातरंगितानितरंगा जाताःयेषुतानित्तरंगितानितानिअंगानियस्याःसातथा ५ शालि
नीमूर्तौलग्नेसौम्याःस्वांत्यराश्योर्द्वितीयद्वादशयोर्यातातथाअसौम्याःपापाःकार्मुकनामयोगंकुर्युःअस्मिन्योगेपरिणीताकन्य

गगनतोयतयस्सुमभैर्भृगुर्गदतिशंखमशंसवलयन्यसौ धनयशोनयशोभितनुश्रियांपरिणायेनय
योरुहचक्षुषां ४ एकादशेकुजरवीरविजःसपत्ने वित्ते विधुस्तपसि शोषनभश्चराश्चेत् श्रीवत्सए
षसुखयत्यपिरूपरिक्तां सौभाग्यभोगभरभंगितरंगितांगीं ५ सौम्यामूर्तौस्वांत्यराश्योरसौम्याःकुर्युर्योगं
कार्मुकंकन्यकास्मिन् हत्वाकांतं कांतवेषाविषाद्यैर्वेश्यारामंरंरमीतिस्वतन्त्रा ६ ॥२२ कांकांतवेषासतीवे

श्यारामंरंरमीति अतिशयेनरमतइतिरंरमीतियङ्लुकवेश्याःरमयंतीतिवेश्यारामःवेश्योपभोगीतमप्येषा अतिशयेनर
मयतीति कथास्वतन्त्रानिजोपभोगकौशलेनकिंकृत्वाविषाद्यैः विषशस्त्रादिधनादिभिःकांतंभर्त्तारंहत्वा ६ सूनौपंचमेगु
रुःदुश्चिक्येतृतीयेसांगिराःसगुरुःगौररश्मिश्चंद्रस्तदांगनाभ्युन्नमश्चेत्स्यात् अंगनायाअभ्युन्नमोभ्युदयःविवाहइति।

वि.रं. टी. ५८ | अ. ११

यावत् यद्वा अंगनाभ्युद्गमः कन्यालग्नतदाद्ये आनंदो नाम योगः तेन योगेन सुंदरी सांद्रसौख्या सांद्रं निविडं सौख्यं यस्याः
सा तथा वंशयोः पितृभर्तृवंशयोरानंदं विस्तृणाति विस्तारयति णिजंतभावः ७ पुष्पिताग्राणि ३ व्यये यो द्वादशे रिपुः षष्ठं।
हिबुकं चतुर्थं एषु वक्रो भौमः शुक्रः प्रसिद्धः द्युमणिसुतः शनिः एभिः क्रमशः स्थितैः एष कुठारो नाम योगः स्यात् इहा
स्मिन्कुठारयोगे परिणीता विटपटले भंडसमूहे विहरति क्रीडति कथंभूता संहृतो मारितः स्ववंशो यया सा तथा पटेव
घ स्वांचलले खितः अभिसारो यस्याः सा तथा असंशं मनिसारिणीत्यर्थः कांतार्थिनी तु या याति संकेतं साभिसारिकेति

सूनौ शुक्रः सांगिरा गौरवरश्मिर्दुश्चिक्ये स्यादंगनाभ्युद्गमश्चेत् आनंदोयं सुंदरी सांद्रसौख्या तेनानंदं वं
शयोर्विस्तृणाति ७ व्ययरिपुहिबुकेषु वक्रशुक्रद्युमणिसुतैः क्रमशः कुठार एषः इह विहरति संहृ
तस्ववंशा विटपटले पटलेखिताभिसारा ८ रविकविरविजेंदुभिः क्रमेण व्ययधनषष्ठनिधनेषु कूर्मे

अभिधानात् यद्वा अभिचारे निपातः अभिचारो व्यभिचारो तत्पाठे व्यभिचारिणीत्यर्थः ८ रविः सूर्यः कविः शु एषः
क्रः रविजः शनिः इंदुश्चंद्रः एभिर्ग्रहैः व्यये द्वादशे धनं द्वितीयं षट् षष्ठं निधनमष्टमं एषु यथाक्रमं स्थितैः एषः कूर्मो राम.
नाम योगः इहास्मिन्योगे विहितः कृतः करग्रहो यस्याः सा तथा परं शतानि गृहाणि भ्रमति शतेभ्यः पराणि परःशता ५८
नि पारस्करादित्वात्सुट् यद्वा परःशब्दो निपात इति भोजराजः शतेभ्योऽधिकानीत्यर्थः कया हेतुभूतया भुजिष्य

तयादोषत्वेन भुजिष्यायाभावो भुजिष्यता त्वतलोर्गुणवचनस्येति पुंवद्भावः नियोज्यकिंकरप्रेष्यभुजिष्यपरिचारका इत्यमरः ९ भवः एकादशं परिभवः षष्ठं विक्रमस्तृतीयं एभिः स्थानैः द्युमणिः सूर्यः महीसुतो भौमः सूर्यस्यापत्यं सौरिः शनिः तैर्यथाक्रमं सनाथैर्युक्तः कृत्वा दलेंदुरर्धचंद्रो नाम योगः परिणमति परिपाकं प्राप्नोति किं करिष्यन् इंदुमुख्याः इंदुवदनायाः स्त्रियः कुलयुगलोद्धतिधूर्यतां विधास्यन् करिष्यन् कुलयुगलं पितृकुलं भर्तृकुलं चेति तस्योद्धृतिरुद्धरणं धुरं वहतीत्यर्थः औपच्छंदसिकं १० व्य-

इह विहितकरग्रहा गृहाणि भ्रमति भुजिष्यतया परःशतानि ९ भवपरिभवविक्रमैः क्रमेण द्युम
णिमहीसुतसौरिभिः सनाथैः परिणमति दलेंदुरिंदुमुख्याः कुलयुगलोद्धतिधूर्यतां विधास्यन् १०
व्ययनिधनतनूषु मंदचंद्रारुणकिरणैर्मुसलं जगुर्मुनींद्राः इह वृष्णिकुलांतके कुमारीकुलमारी न च
कापि कार्यसिद्धिः ११

यो द्वादशं निधनमष्टमं तनुर्लग्नं त्रियां मूर्तिस्तनूस्तनुरित्यमरः तेषु यथाक्रमं मंदः शनिः चंद्रः प्रसिद्धः अरुणकिरणः सूर्यः तैः स्थितैः कृत्वा मुसलं नाम योगं मुनींद्रा जगुः इहास्मिन् वृष्णिकुलांतके योगे वृष्णयो यादवाः तेषां कुलं तस्यांतकं संहारकं मुशलमित्यर्थः क्रीडद्भिर्यादवैः शांबजठरे यद्धेष्टितं मुसलं तेन मुसलेन यादवा विनष्टा इति भागवतादौ प्रसिद्धं अस्मिन्मुसले योगे कुमारीकुलनाशिनी भवति न च कापि कार्यसिद्धिर्भवति केवलकुलनाशिन्येवेत्यर्थः ॥११ पुष्पितानाग्रं तनुर्लग्नं नवनवमं भवएकादशं तेषु गतैः यथाक्रमं बुधः प्रसिद्धः विबुधार्चितो गुरुः पंगुः शनिः एभिः

कन्यागजोनामयोगःस्यात् इहास्मिन्योगेयुवतिःस्त्री अहंकृताहंकारंयासासतीकृतानिष्पादितान्यनेअर्थाश्चतान्वितरन्
तिददाति वाउन्यथवायुवतिःदैवतदैवतत्परास्यात् दैवतानिचदैवंचदैवतदेवानितेषुतत्परादेवार्चनरताभाग्यरताचेत्य
र्थःभाग्यवतीनियावत् १२ इतिश्रीसकलागमाचार्यवर्यश्रीकेशवदैवज्ञसुतगणेशविरचितायांविवाहवृंदावनटी
कायांविवाहदीपिकायांग्रहयोगाध्याय एकादशः११ पूर्वंमरिपराक्रमेत्यादिनासाधारण्येनग्रहफलान्युक्तानि अ
धुनाप्रतिस्थानंतानिसविशेषाण्याह तत्रादौलग्नस्थग्रहाणांफलानि शिखरिणीमूर्तौलग्नेस्थितोजीवःसुरगुरुःशत्रि

तनुनवभवगैःक्रमेणयोगोबुधविबुधार्चितपंगुभिर्गजःस्यात् इहयुवतिरहंकृताकृतार्थान्वितरति
दैवतदैवतत्परावा १२ इतिविवाहवृंदावनेग्रहयोगाध्याय एकादशः ११ अथग्रहाणांभावकुंड
लिकाध्यायः चिरंजीवांजीवःकविरविरलानंगसुभगांशशांकोर्वीपुत्रौयमयुवतिपार्श्वप्रणयिनीं

यंचिरंजीवांसृजतिचिरंजीवतीतिचिरंजीवाचिरमित्यव्ययंविभक्तिप्रतिरूपकंकविःशुक्रः अविरलानंगसुभगांसृज
ति अविरलोनिविडश्चासौअनंगश्च अनंगोमदनःतेनसुभगांसौभाग्यवतीं शशांकश्चंद्रःउर्वीपुत्रोभौमस्तौयमयुवति
पार्श्वप्रणयिनींसृजतःयमस्ययुवतिःतस्याःपार्श्वसामीप्यंतत्रप्रणयःप्रीतिरस्ति अस्याःसातया तांयमलोककां
क्षिणीमित्यर्थःबुधोभर्तुःभक्तांसृजतिशनिरपि अशीलांदुष्टशीलांत्रयीमूर्तिःसूर्यःशिखिरग्निःशस्त्रप्रसिद्धंते।

आदित्यैर्यातानि शिखिशस्त्रादीनि तेभ्योनि धनं यस्याः सा तथा तां १ अथ धनभावस्य फलं वृत्तं धने द्वितीयभावे स्थि
ताः सितसितांशुजीवेंदुजाः नितांतधनिनीं जनयंति सितः शुक्रः सितांशुश्चंद्रः जीवो गुरुः इंदुजो बुधः नितांतः धनं
तदस्त्यस्याः सा तथा धरानंदनो भौमः रुजादहनदस्युभिर्विधुरितां जनयंति रुजा रोगः दापं वै वहलं तानाग्निमिति दाप
दहनोग्निः दस्यवश्चौराः सर्पादयो वा विधुरा वियुक्ता भार्तृहीना तस्या भावो विधुरता वैधव्यं पुंस्त्वं पूर्ववत् अर्का
त्मजः शनिः सुतेषु पुत्रेष्वपि विषयेमितं पचां मलिनमूर्तिं जनयति मितं पचतीति मितंपचा कृपणा मितेन विशस्वि

बुधो भर्तुर्भक्तां मृगदृशमशीलां शनिरपित्रपी मूर्तिं मूर्तौ सृजति शिखिशस्त्रादि निधने १ नितां
तं धनिनीं धने सितसितांशुजीवेंदुजा रुजादहनदस्युभिर्विधुरितां धरानंदनः सुतेष्वपि मि
तंपचां मलिनमूर्तिमर्कात्मजः स्त्रियं सहजदुर्भगां जनयति द्युतीनां पतिः २ ११ त्वान्मम मलिना

मूर्तिर्यस्याः सा तथा द्युतीनां पतिः सूर्यः सहजदुर्भगां जनयति सहजातं सहजं स्वाभाविकं दुर्भगं अदैवं यस्याः सा तथा
यद्वा सहजे सोदरविषये दुर्भगो यस्याः सा तथा २ अथ तृतीयस्य द्रुतविलंबितं सहजे तृतीयभावे दुनशनीरविश
नीवधूं सधनां धनसहितां कुरुतः सचिवः शुक्र सचिवो बृहस्पतिः तनु धनोकरोति तनुरूपं धनं यस्याः सा तथा शशी
शीचंद्रः सुभगां सुष्ठु भगो भाग्यं यस्याः सा तथा कुजसोमजौ भौमबुधौ सुकृतिनीं कुरुतः सुकृतं पुण्यं तदस्त्यस्याः सा

वि॰चं॰ तथादेवरिपूपनीःशुक्राः देवरिंदेवरंनयतिप्रापयतिदेवरगामिनीत्यर्थः देवानांरिपवोदैत्याःतान्उपनयतेसौदेवरिपूपनीः अ॰
टी॰ दैत्यगुरुःदेवइतिकःकारांतःसमौतुदेवृदेवराविव्यभिधानात् ३ अथचतुर्थस्यमहर्षिणीसुखेचतुर्थेभावेरविःदारि १२
६० द्र्यंसृजति अवनीसुतोभौमः वरांगव्याघातंवरांगंशिरःतस्यव्याघातोभंगः गुरुभृगुजेंदुजाः प्रभुत्वंसृजंतिगुरुः।
वृहस्पतिः भृगुजःशुक्रः इंदुजोबुधः प्रभुत्वंस्वामित्वं अब्जश्चंद्रमाःवाल्येवालत्वेप्रियवियुतिंभर्तृवियोगं शनिः
स्तनोभःशून्यत्वंस्तनयोरंभःस्तनांभःस्तन्यदुग्धंतस्यशून्यत्वंअभावंसृजतिकासांसुवासिनीनांपौढांगमानांचि

इनशनीसहजेसधनावधूतनुधनासविवःसुभगांशशी सुकृतिनींकुरुतःकुजसोमजौन
यतिदेवरिंदेवरिपूपनिः ३ दारिद्र्यंरविरवनीसुतोवरांगव्याघातंगुरुभृगुजेंदुजाःप्रभुत्वंवाल्ये
ब्जःप्रियवियुतिंशनिस्तनांभःशून्यत्वंसृजतिसुखेसुवासिनीनां ४ सन्सुत्रामसुरसुरेज्यसोमपु
त्रारिंरविरसुतप्रजांद्विजेंद्रःशोकांतामवनिसुतःसुतस्यसेनिःसंतानेसततरुजंसृजेत्कुमारीं

रंडीतुसुवासिनीत्यमरः ४ अथपंचमस्यमहर्षिणी असुराश्चसुराश्चअसुरसुराःतेषामिज्यौशुक्रगुरुसोमपुत्रोबुधः राम॰
सतेषुसतस्थाःपंचमभावस्थिताःकुमारींसत्पुत्रांसृजेयुःकुर्युःरविःपुत्रारिंसृजेत् पुत्राणामरिःपुत्रघातिनीद्विजेंद्र ६०
श्चंद्रोसुतप्रजांसुतेभ्योन्याअसुतासाप्रजायस्याःसातथाकन्याप्रसूः अवनिसुतोभौमःशोकांतांशोकेनक्रांतांयां

डितां शेनिः इनस्यापत्यंशेनिः संज्ञानेसैततनि विषयेसततरुजं सततंनित्यंरुक्‌ रोगोयस्याः सातथातांसृजेत् ५ अथष
ष्ठेपृथ्वीवृत्तं वैरिगः षष्ठभावगः विधुः चारुभ्रुवां चारू वोभ्रुवोयासांताः तासांस्त्रीणां निधनंव्यनक्ति प्रकटयतिदर्श
तीत्यर्थः इंदुजोबुधः परभयंशत्रुभयंभानुमानभानुर्वारश्मयःसंत्यस्यासोतथासूर्यः जयंकुजोभौमः कुशलंसे
मश्चअर्कांङ्गवतीत्यर्कभूः शनिर्विगतवैरतां विगतंवैरंयस्याः साविगतवैरातस्याभावोविगतवैरता प्राग्वत्पुनस्त्व
उशनाशुक्रः सहचरेणमित्रेणसमं सार्द्धं रिपुत्वंशत्रुत्वं सहचरनीतिसहचरः वचसांपतिर्वृहस्पतिः भर्तारंअजा

विधुर्निधनमिंदुजः परभयंजयंभानुमान्कुजः कुशलमर्कभूर्विगतवैरतांवैरगः रिपुत्वमुशनासहं
सहचरेणचारुभ्रुवांव्यनक्तिवचसांपतिः पतिमजातशत्रुश्रुतिं ६ बुधोवंध्यामिंदुः परिचित्तस
पत्नीपरिभवांगलद्गर्भांपंगुः परनररतांदानवगुरुः भवीरामल्लेकौगुरुरमरसेव्यस्सनिनींविवा
हेमाहेयःस्त्रियमतिरजस्कांजनयति ७ ॥

तशत्रुश्रुतिंव्यनक्तिशत्रूणांश्रुतिः श्रवणं अजाताशत्रुश्रुतिर्
यस्यासोतथाशत्रुरितिश्रवणमपिनास्तीत्यर्थः ६ अथसप्तमेशिखरिणीविवाहे विवाहकाले अस्तेसप्तमभावेस्थि
तोबुधः स्त्रियंवंध्यांजनयति इंदुश्चंद्रः परिचित्तसपत्नीपरिभवांसपत्न्याःसंबंधीपरिभवः पराभवः सपत्नीपरिभवः
परिचितः परिरूढः सपत्नीपरिभवोयस्याः सातथापंगुःशनिः गलद्गर्भांगलंतश्च्यवंतः गर्भायस्याः सातथादान

वि॰चं॰ वग्रुरुः स्युक्रः परनरत्तांपरपुरुषगामिनीं अर्कः सूर्यः अवीरांनास्तिवीरोभर्त्तायस्याः सात्तथागुरुः अमरसेवाव्यसनिनीं अम अ॰
टी॰ रसेवायांव्यसनंविद्यतेयस्याः सातथा माहेयोभौमः अतिरजस्कांजनयति अतिशयितंरजोयस्याः सातथामदरव्याधियुक्ता॥ १२
६१ मित्यर्थः ७ अथाष्टमे मालिनीमृत्युवेश्मनिअष्टमभावेसितसितकिरणेज्याः द्रुहिणगृहसुखीनास्त्रीणामेरणायभवंति
सितभृगुक्रः सितकिरणश्चंद्रः ईज्योगुरुः द्रुहिणोब्रह्मातस्यगृहंपद्मंतद्वत्सुखंयासांतास्तथा सूर्यसौरीरविशनी अन
वरतसुखायुः संपदेभवतः सुखंच आयुश्च संपच्च सुखायुः संपत् द्वंद्वैकत्वंक्लीवत्वंच अनवरतमखंडितंचतत्सु॥

सितसितकिरणेज्यामृत्यवेमृत्युवेश्मन्यनवरतसुखायुः संपदेसूर्यसौरी भवतिपतिशरीरद्रोहकृद्रौहिणेयोद्रुहि
णगृहसुखीनांयस्मरोस्फोरिाजन्मा ८ शशिसुतगुरुभृक्राः सांद्रसौभाग्यलीलांसरलहसितकांतस्वांतके।

स्वायुः संपत्तसौरोहिण्या अपत्यंरोहिणेयोबुधः पतिशरीरद्रोहकृतस्यात् पत्युः शरीरंतस्यद्रोहः अथ ९ लिकुमारीं॥
घातः तंकरोतीतितथा स्रोणिजन्माभौमः यक्ष्मणव्याधयेभवेत् ८ अथनवमेमालिनीतपसिनवमभावेशशिसुतगुरुशु
क्राः कुमारींसांद्रसौभाग्यलीलांसरलहसितकांतस्वांतकेलिंकुर्वंति शशिसुतोबुधः गुरुशुक्रौप्रसिद्धौसांद्रंनिविडंयत सम॰
त्सौभाग्यंचतत्स्यलीलायस्याः सातथासरलं आर्जुनत्वनद्धसितंचतत्तथाकांतस्यभर्तुः स्वांतंमनः कांतस्वांतंसरलहसित ६१
तकांतस्वांतेकेलिः क्रीडायस्यसंबंधेनसातथारविरविसुतवक्राः केतवाक्रांतशीलांकुर्वंतिरविः सूर्यः रविसुतः शनिः

वक्रो भौमः कैतवं कपटं तेन आक्रान्ते युक्तं शीलं यस्याः सा तथा तु हिनरश्मिश्चन्द्रः स्त्रीं सवित्रीं करोति सूते सा सवित्री स्त्रीणां
सवित्री कन्याप्रसूः ९ अथ दशमे मालिनी व्योम्नि दशमभावे शनिः कन्यकां अनियमशीलां रचयति करोति नियमेन रहितं शी
लं यस्याः सा तथा अशुचित्वहीना इत्यर्थः विधुश्चन्द्रः अन्यकार्यैः परकर्मभिः अतिविधुरांगीं रचयति अतिशयितं विधुराणि विक
लानि अंगानि यस्याः सा तथा वक्रो भौमः शाकिनी डाकिनी क्षुद्रदेवताविशेषः शाकिनीव शाकिनी मांसभक्षिकेत्यर्थः रविः सूर्य
उग्रां अशीलां कोविदो बुधः कार्मणज्ञां कार्मणं सुतकर्मविशेषः तज्जानातीति तथा आर्यभृगौ गुरुः शुक्रो अविकृतसुकृ

रविरविसुतवक्राः कैतवाक्रान्तशीलां तपसि तुहिनरश्मिः स्त्रीं सवित्रीं करोति ९ शनिरनियमशीलां कन्यकां
मन्यकार्यैर्विधुरतिविधुरांगीं शाकिनीं व्योम्नि वक्रः रचयति रविरुग्रां कोविदः कार्मणज्ञाम् अविकृतसुकृतश्री
मालिनीमार्यशुक्रौ १० एकादशे दशशान्ताः शुभसुखाः सुखानि रत्नाम्बरद्रविणभोगभरोन्मुखानि ॥ ६ ॥

तश्रीमालिनीं रचयतः सुकृतं च श्रीश्च सुकृतश्रियौ पुण्यलक्ष्म्यौ अविकृते पूर्णे च ते सुकृतश्रियौ च ताभ्यां मालते शोभते
सा तथा अत्र मालिनीति छन्दसोऽपि नाम सूचितं १० वसंततिलकादीर्घाद्दृग्लोचनयासां तास्तासां स्त्रीणां पाणिग्र
हे एकादशे स्थाने दशशान्ताः शुभसुखा दशाशान्तानि अंशवः किरणा यस्यासौ तथा समुखमादिर्येषां ते सूर्यादयो ग्रहेन्द्राः
रत्नाम्बरद्रविणभोगभरोन्मुखानि सुखानि ददति रत्नानि च अंबराणि च द्रविणं च तेषां भोगः तस्या भरो भारः तस्मादुन्मु

वि·वृं· खानिउदितानि अथश्लोकावशेषेसति अत्रैवग्रहाणांभावफलेषुबलप्राशस्त्यमाह सर्वेपीति सर्वेपिग्रहाअबला: अ·
टी· स्थानादिबलहीना:संत:सर्वभवनेषुलग्नादिसर्वभावेष्वपिकिंचिच्छुभमशुभंवानेदद्यु:अर्थादेतत्फलमुक्तंतत्स १२
६२ बलानामेवेति ११ अथअयेरुचिरावृतंअयंद्वादशेस्थिता:शुभा:बुध गुरुशुक्रा:स्त्रियंसद्व्ययकर्षितां रचयंतिकु
र्वंतिसंश्वासौव्ययश्चतेनकर्षितांकृशांत्वंप्राप्तांनोशनि:सुरारुचिंसुरायांरुचिर्यस्या:सातथादुष्टाविधायंस्यास्तांविधु
श्चंद्र:दुर्विधांविधानंविधादुर्विधांदुष्टकर्मांकुजोभौम:अदक्षिणावयववरुजंअदक्षिणश्चासावयवश्चतस्यरुग्रो

पाणिग्रहेदद तिदीर्घदृशांगृहेंद्रा:सर्वेपिसर्वभवनेष्वबलानकिंचित् ११ व्ययेशुभा:सद्व्ययकर्षितां
शनि:सुरारुचिंरचयतिदुर्विधांविधुश्च अदक्षिणावयवरुजंकुजोरविर्विरूपयत्यतिरुचिरामपि
स्त्रियं १२ इतिमुनिजनमतमतनुवितर्कंप्रतिगृहचरखेचरोद्भवदर्कं परिविगणय्यविशेषमशेषं
(( फलमिदमशेषमनुज्झितरेखं १३
गोयस्या:सातथाचामांगव्याधितां रविरतिरुचिराअतिसुंदरामपिस्त्रियं
विरूपयति विरूपांकरोति रुचिरेतिछंदसोपिनाम १२ अथैषांभावफलादीनांप्राशस्त्यमाह इत्यनंतरोक्तं इदं दाम·
लग्नादिभावस्थितग्रहाणांफलमशेषंसमस्तमनुज्झितरेखंभवेत् नउज्झितानुज्झितारेखायेनतत्तथा अत्यक्तमर्या ६२
दंयथावद्भवतीत्यर्थ:कथंभूतंमुनिजनमतंमुनिजनानांसंमतंअनतु:पृथु:वितर्कोयस्यतत्तथा यद्यप्युक्तानार्थमे

वदृश्यते तथापिग्रह बलादिविचारवशादूह्यवितर्क्यमित्यर्थः पुनः कथंभूतं प्रतिगृहेतिगृहं गृहं प्रतिप्रतिगृहं प्रति
गृहं चरन्तिते प्रतिगृहचराः तेचतेखचराश्च तेभ्यउदेति उद्भवतीतिप्रतिगृहचरखेचरोद्यत् सउदर्कः उत्तरकाली
नं शुभाशुभंफलं यस्मिन् तत्तथा किंकृत्वा अशेषं परिविगणय्य प्रागुक्तंसमस्तं विशेषं बलाबलरूपं विचार्ये
त्यर्थः ११ इति श्रीसकलागमाचार्यवर्यश्रीकेशवसांवत्सरात्मजगणेशविरचितायां विवाहवृंदावनटीकायां
विवाहदीपिकायां ग्रहाणां भावकुंडलिकाध्यायो द्वादशः १२॥ अथोक्तभावफलानांव्यवहारार्थमुपसंहा।

इतिविवाहवृंदावनेग्रहाणांभावकुंडलिकाध्यायोद्वादशः १२ अहग्रहयोगादिबलाबलाध्यायः
षट्त्र्यायेष्वशुभाः शुभायनिधनंद्यूनांत्यवर्ज्यंपरेत्र्यायार्थेषुशशीमृतौशनिरवीभंगायतत्रापरे

रादिकं तथान्यदपि शुभाशुभयोगादिकं बलादिकंच निरूपयन् ग्रहबलाध्यायमारभ्यते तत्रादौ भावफलोप
संहारादि शार्दूलविक्रीडितं षट् षष्ठं त्रयस्तृतीयं आयं एकादशं एष्वशुभाः पापग्रहाः शुभायभवंति शेषे
ष्वशुभायनिधनंमष्टमंद्यूनंसप्तमं अंत्यं द्वादशं एतानि वर्जयित्वान्येषु नवसुस्थानेषु परे सौम्यग्रहाबुधगुरुशु
क्राः शुभायभवंतिशेषेषु निधनद्यूनांत्येषु अशुभाय शशीचंद्रः त्र्यायार्थेषु तृतीयैकादशद्वितीयेषु शुभायभ
वेत् शेषेष्वशुभायतत्राष्टमे सर्वेषां विशेषमाह मृताविति मृतौ अष्टमे शनिरवी शुभाय भवतः तत्वशुभायअ

त्ररवेरुपलक्षणाद्वाक्रूरस्याष्टम स्थभः न तत्स्वरूपांतरं वै तु श्चवराह फलस्य रवेर निर्दिष्टोक्तेः तत्राष्टमेस्थानेपरेन्ये चंद्रभौमबुधगु
रुशुक्राभंगायभवंतिलग्नभंगकर्त्तारइत्यर्थः अन्यान पिलग्नभंगानाह क्रूरद्यूनेति शशितनूक्रूरद्यूनवृत्तान्विते भंगायभव
तः द्यूनंवृत्तमावृत्तंययोस्ते द्यूनवृत्ते द्यूनवृत्ते अन्विते चद्यूनवृत्तान्विते क्रूरराध्यूनवृत्तान्विते तेनतथा चंद्रस्यलग्नस्यवासप्तमं
क्रूराक्रांतंभवेत् यद्वाचंद्रोलग्नंवाक्रूरान्वितं भवेत्तदालग्नभंगः स्यादित्यर्थः अस्तेसप्तमेलग्नाद्वा चंद्राद्वा सितज्ञौशुक्रबुधौ
वासौपिभंगायलग्नेविधुश्चंद्रः भंगायहिषिषष्ठे सोमसिताधिपाः भंगायस्युः सोमश्चंद्रः सितः शुक्रः अधिपाः स्वामिनः लग्नं

क्रूरद्यूनवृत्तान्वितेशशितनू अस्तेसितज्ञौविधुर्लग्नेसोमसिताधिपाद्विषसितः सेंदुर्विनष्टांशपः १॥
अनूर्येकायकेंद्रगः सुहृत्स्वसौम्यवर्गयुक् सुहृच्छुभेक्षितः शुभः शशीमयूखमांसलः २॥ ६॥



शाद्रेष्काणानां अत्रषष्ठंलग्नादेवनतुचंद्रात् सोमग्रहणात् सितः शुक्रः सेंदुः सचंद्रः भंगायशुक्रयुक्त चंद्र इत्यर्थः अंश
योनवांशाधीशोविनष्टोस्तंगतोभंगायस्यात् १ अथसप्तमदशमचंद्रस्यविशेषमाह अमापिकानुर्येचतुर्थेकायोलग्नंता
भ्यामन्यानि अनुर्यकायानितानिचतानिकेंद्राणिच तत्रगतः सप्तमदशमगइत्यर्थः शशीशुभः स्यात् कथंभूतः सुहृदित्यादि
सुहृच्चस्वश्चसौम्यश्चतेषांवर्गः तेनयुनक्तीतितथा सुहृद्वर्गगः स्ववर्गगः सौम्यवर्गगोवेत्यर्थः सुहृच्चशुभश्चताभ्यामीक्षि
तः सुहृद्दृष्टः शुभदृष्टश्चेति बहुमांसमस्त्यस्येतिमांसलः सिध्मादिभ्यश्चेतिमत्वर्थीयोलः मयूखैः किरणैर्मांसलः त्रिसि

भिः पुष्ट इत्यर्थः सप्तमदशमोपि चंद्र एवंविधः शुभः स्यादिति भावः अत्रापि अव्ययकोणकेंद्रेति पाठः तत्र अव्ययकोणकेंद्राणि चतुर्थसप्तमदशमनवमपंचमानि तथा च शौनकः त्रिकोणसप्तमांबरव्ययोपगोपि लग्नतो हिमद्युतिः शुभसंगः शुभेक्षितश्च शोभन इति अत्र व्ययस्थोपि गृहीतः स तु नारदेन महादोषेषु पठितो ऽतोसौ ग्रंथकृता त्यक्तः २ अथ शुभयोगानाह मालिनी नवघात इति प्रत्येकं संबध्यते शशितनयो बुधः सितः शुक्रस्ताभ्यामनुगताभ्यां क्रमेण नंदभद्रौ योगौ स्तः बुधेन लग्नगतेन नंदः शुक्रेण भद्र इति उभाभ्यां लग्नगताभ्यां जय इति योगः जीवे गुरौ तनुयाते जीव इति योगः असुरसुराणां गुरू शुक्रगुरू ताभ्यां तनुस्था-

शशितनयसिताभ्यां नंदभद्रावुभाभ्यां जय इति तनुयाते जीव इत्येष जीवे असुरसुरगुरुभ्यां स्था-
वरो ज्ञेज्यशुक्रैर्विजय इति विशुक्रं तेच जीमूतमाहुः ३ इति शुभफलयोगाः सप्त सप्तर्षिमुख्यैर्मुनिभिरभि-
हितास्ते जन्मयात्रास्वपि स्युः

ताभ्यां स्थावर इति योगः ज्ञेज्यशुक्रैः बुधगुरुशुक्रैस्तनुयातैर्विजय इति योगः तमेव योगं विशुक्रं शुक्रवर्जितं बुधगुरुभ्यां लग्नगताभ्यामित्यर्थः जीमूतं नाम योगमाहुर्मुनयः ३ अथैषां फलमाह मालिनी इति सप्त शुभफलयोगाः सप्तर्षिमुख्यैर्मुनीन्द्रैरभिहितास्ते योगाः जन्मयात्रास्वपि स्युः न केवलं विवाहे किंतु जन्मकाले यात्राकाले च शुभफलदा इत्यर्थः तत्किं शुभफलं इत्याह भजतीति एभिर्योगैर्युवतिः भूपसीमंतिनीत्वं भजति भूपस्य सीमंतिनीत्वस्याभावस्तथा नारी सीमंतिनी वधूरित्यमरः राजपत्नी भवतीत्ययमर्थः अस्मिन् शुभफले ग्रहयुतिबलयोगादुत्तराधं स्यात् ग्रहाणां युतियोगः तत्र बलयोगः

सबलत्वंतत्समान् उत्तरंच अधरंच उत्तराधरे तयोर्भावः उत्तराधर्यं योगकर्तृग्रहाणांबलवशाच्छुभफलस्याधिक्यं न्यूनत्वं 
च कल्प्यमिति भावः ४ अथाशुभयोगानाह मालिनीननोर्गृहंतनुगृहं तेनयुनक्तीति तनुगृहयुक् तस्मिन्लग्नगत
त्यर्थः एतत्सन्त्येकंसंबध्यते दिनकररुधिराभ्यांलग्नगताभ्यां क्रमेण व्यालपातालवक्त्रौ योगौस्तः रविणालग्नगतेन
व्यालोभौमेनपातालवक्त्र इति रविपुत्रेशनौलग्नगतेसयइतियोगः सैंहिकेयेराहौलग्नगतेतमस्कमितियोगः केतौलग्नग
ते श्वेतकइतियोगः सर्वपंचतेषुयोगेषु पंकजाक्षीनारीशोकव्यसननिधनताभिः तप्यते कर्म...तिरूपंनिधनताभिरिति करणं

भजतियुवतिरेभिर्भूपसीमंतिनीत्वं ग्रहयुतिबलयोगादुत्तराधर्यमस्मिन् ४ दिनकररुधिराभ्यां व्यालपाता
लवक्त्रौसयइतिरविपुत्रेसैंहिकेयेतमस्कंतनुगृहयुजिकेतावंतकस्तेषुशोकव्यसननिधनताभिस्तप्य

यहाकर्मणिरूपंनदानिधनताभिरितिकर्त्तासतन्त्यन्येकंफलं ५ अथान्यदृष्टयोगद्वयमाह मा ॥ तेपंकजाक्षी
लिनीतनुर्लग्नंतुहिनमरीचिश्चंद्रः तयोर्लग्नचंद्रयोः चरगृहगतयोश्चरराशिस्थितयोः आधारेससमीअंगनाखेटः
शुक्रः तस्यदृष्टौसत्यां चरराशिस्थौलग्नचंद्रौशुक्रेणादृष्टावित्यर्थः चेद्यापितीग्रहा अविदिशिस्थिताः संतोबलिनः 
स्युः तदाकुमार्याः कांतयुग्मंभर्तृद्वयंस्यात् एतदुक्तंभवति जातकेप्राच्यादिषुजीवबुधावित्यादिनादिग्बलान्यासेल
ग्नंप्राच्यांभवति चतुर्थमुदीच्यांसप्तमेप्रतीच्यांदशमंदक्षिणइतिशिष्टान्येष्ठौतन्मध्यवर्तिषुचेतस्युविदिक्शुभ

वंनिकोणगतादिग्विदिगित्युच्यतेतस्यां अन्या अविदिक् सादिगेव प्राच्यादिकानस्यां स्थिताः यायिनोग्रहाः लग्नेचतुर्थे सप्तमेदशमेचेत्यर्थः यानुशीलंयेषांतेयायिनः स्थानुशीलंयेषांतेस्थायिनस्तएव पौराः उभयविलग्नः आक्रंदः तेव राहेणोक्ताः रविराक्रंदोमध्येपौरः पूर्वेपरे स्थितोयायी पौरा बुधगुरुरविजा नित्यंशीतांशुराक्रंदः केतुकुजराहुस्क्रायायिनइति अथयोगः शौनकेनस्पष्टमुक्तः लग्नेद्युचरराशौ केंद्रस्था यायिनो यदाबलिनः योषिद्दृहस्य दृष्टापतिहृदयंगच्छतेनारीति अथद्वितीयंयोगमाहयुग्मइंदावितियुग्मेसमराशौ स्थितेइंदौचंद्रे अशुभदृशंपापदृष्टिमुपेते

तनुतुहिनमरीच्योरंगनास्वेदृष्टौचरगृहगतयोः स्यात्कांतयुग्मंकुमार्याः अविदिशिबलिभिर्वायायि-
नोयुग्मइंदावशुभदृशमुपेतेकन्यकान्यकाम्या ६ नरः प्रियोनीरजलोचनानां [illegible]उत्कटकांतिवी



मासेपापग्रहदृष्टइत्यर्थः तदाकन्यका अन्यकाम्यास्यात् काम्यतेतत्काम्यं अन्यस्यकाम्यं यस्याः सातथापरपुरुषकांक्षिणीत्यर्थः तथाचशौनकः क्रूरग्रहसंदृष्टेसमर्क्षगेशशिनिभजतिपतिमन्यं स्त्रीणामन्यचरा [illegible] दृष्टेशुभंभवतीति ६ अथग्रहविशेषेणफलवशात्फलान्तराण्याह उपजातिका नरग्रहैः पुरुषग्रहैः उत्कटकांतिवीर्यैः कांतिश्चवीर्यंचउत्कटेकांतिवीर्येयेषांतेतथा अतिशयितप्रकाशैः निर्बलै[illegible]यैः तदानीरजलोचनानां स्त्रीणां नरोभर्ता प्रियः स्यात् नारीनभोगैः स्त्रीग्रहैर्बलशालिभिः बलेनशालंतेशोभंतेतेबलशालिनः तदानारीनृणांचित्तहरा प्रियास्यात् [illegible] स्वभोगैः निजभोगकौशलैः

वि·वृं· पुरुषस्यनारीप्रियास्यादित्यर्थः बुधसूर्यसुतौ नपुंसकाख्यौ शशिभृग्वाख्यौ युवतीनराख्याः शेषा इति स्त्रीग्रहद्वित्वे सति नाशिनभो अ·
टी· शौरिति बहुत्वंकथमुपपद्यते उच्यते शौनकीये [...] हरिनिवहत्वमस्ति अतोस्यपूज्यार्थता आदित्यादिगोनिश्चितंत्यासकिंच ७ १३
६५ वैतालीयंसुखरग्यासाना: सुहृशः नासांस्त्रीणांपतिः अस्तपतिः ससमाधीशः स्यात्‌ विरोचनः सूर्यः स्वसुरः मदग्रहः सुकलस्य
स्वसुरस्सप्तमंदास्त्रीभर्तृरित्यर्थः अमीपत्यादयः स्वचराः अवलानिर्वलाः वलिनः सवलाः अमी सुहृशांस्त्रीणांतेषुपत्यादि
ष्वशुभंशुभंदिशंति ददति किंच ८ वैतालीयंकरग्रहे पाणिग्रहसमये शशिसूर्यसुतौ [...] सुतैः चंद्रशनिभौमैः ययाते

नारीनृणांचित्तहरास्वभोगैर्नारीनभोगैर्वलशालिभिस्तु ७ पतिरस्तपतिर्विरोचनः [...]सलम्मम
दामदग्रहः अवलावलिनो दिशंत्यमीसुहृशांतेष्वशुभंशुभेक्रमात्‌ ८ शशिसूर्यसुतैर्[...]नीसुतै
रविनीचास्तगतैः करग्रहे अपितन्वधिपेनतप्यतेनिरपत्यानियतं नितंविनी ९ ॥ ॥

यावस्थितैः रविनीचास्तगैः तैः श्रुरिः शत्रुगृहं नीचगृहं स्तसमस्तमयः तत्रगतैः अपिः समुच्चयेतन्वधिपेनापि अरि।
नीचास्तगतेन एवंयोगे नितंविनी स्त्री निरपत्या अपत्यरहितासती नियतं निश्चितंतप्यते तापंप्राप्नोति अत्रसप्तम राम·
भवने निर्वले सतीति प्रसंगोस्व्यं तथाच शौनकः लग्नपतौ रिपुभवने नीचे वारविसुतारजनीकरैः वलरहितेच द्यूने । ६५
स्त्रीणांनभवंत्यपत्यानि अथ शास्त्रविरुद्धं किंचिल्लोके लिनदुपहसंति ९ उपजातिकावृत्तीयस्यकवेः शुक्रस्य।

रेखा शुभाय भवेत् लग्नस्य ग्रहबलावलोकने गणनार्थं प्रतिग्रहमेकैका रेखा क्रियत इति ज्योतिर्विदां संप्रदायः तत्र तृतीयः शुक्रः शुभ इति कृत्वा रेखा क्रियत इत्येका रीतिः नभस्थो दशमस्थो भौमः लग्नं न भनक्ति लग्नभंगकर्ता न भवेदित्यन्या रीतिः न द्यूने द्यूनदशे सौरिः शनिरपि लग्नं भनक्तीति तृतीया रीतिः इयं रीतिः पद्धतिर्जनेषु कुतस्त्या जागर्ति नरां इयं रीतिः सर्वथा निर्मूला लोकेषु कस्माद्धेतोर्जाता अतिप्रसिद्धास्तीति अस्या न कुत्रापि मूलं दृश्यत इत्यर्थः कुतो जाता कुतस्त्या अतिशयिता जागर्ति जागर्ति नरा आख्याता नरप आप्रचतदं नमव्ययं १० अथ जामित्रदोषस्य भंगमाह [illegible]

कवेस्तृतीयस्य शुभाय रेखा लग्नं नभस्थो न भनक्ति भौमः न द्यूनये सौरिरपीति रीतिर्जनेऽत्र जागर्ति न
रो कुतस्त्या १० उशना गुरुरिंदुनंदनः शशिजामित्रगपापतापहृत् नवपंचमकेंद्रगस्त्रिभुजगाय्यी पुष्ट
११ दृशा विधुं स्वदृशन्

ना शुक्रः गुरुर्वृहस्पतिः इंदुनंदनो बुधः अयमेकोपि शशिजामित्रगपापतापहृत्स्यात् शशानो जामित्रं तत्र गच्छतीति तथा स चासौ पापश्च तस्य तापः अशुभं तं हरतीति तथा चंद्रात्सप्तमपापस्य दोषहर्ता भवतीत्यर्थः कथंभूतः नवपंचमेति नवपंचानां पूरणे नवपंचमे ते च केंद्राणि च नवपंचमकेंद्रे तत्र त्रितन्मित्रभं तत्प्रणयोस्त्यस्यासौ तथा नवपंचमकेंद्रगतः स्वमित्रगृहे श्रेष्ठो वा इत्यर्थः अपि च पुष्टदृशा विधुं स्वदृशन् पूर्णदृष्ट्या चंद्रं पश्यन्नित्यर्थः अत्र केंद्रसमाविरहितं ज्ञेयं अशुभत्वात् तथा चोक्तं हरिजदिवसे चंद्रात्सप्तमक्रूरदोषस्य कर्दमरपूज्यः

वि॰वृ॰ सोमपुत्रः सितो वा उदयहिबुके धर्मव्योमपुत्रतपस्थो यदि च सकलदृष्ट्यालोकयेच्छीतरश्मिमिति ११ तत्र परिपूर्णा। अ॰

टी॰ जामित्रदोषे अभंगत्वमाह वैतालीयं यदि हिमरश्मिनवांशकाच्चंद्रस्थितनवांशकात्खलखेटः शरसायकांशके १३

६६ पंचपंचाशत्तमे नवमांशे भवति अयमुपसर्गडंबरः दोषाडंबरः निविडः परिपूर्णः अयमन्यगुरौर्न हन्यते चेज्जामि
त्रगोपि पापः यदि षड्जातरे भवति न दायं दोषः केनापि गुणेन न भज्यत इत्यर्थः १२ अथ योगानां विचारगम्यत्वम
स्तीत्याह वैतालीयं केपि केचन शरीरधारिणः संपूर्णा प्रत्यक्षदृश्यमाना योगाः किल फलाः स्युः किंवत् शिखिद-

हिमरश्मिनवांशकात्खलो यदि खेटः शरसायकांशके अयमन्यगुरौर्न हन्यते निविडोऽप्युपस-
र्गडंबरः १२ मोघाः शिखिदग्धबीजवद्योगाः केपि शरीरधारिणः दृढगूढफलोदयाः परे प्रकी-

ग्धबीजवत् शिखिना वह्निना दग्धं यद्बीजं तद्वत् यथा वह्निदग्धं बीजं प्रत्यक्षसंपूर्णा ९ र्णहुताशराशिवत् १३॥
वयवमपि कार्यक्षमं न भवेत्तद्वत् केचिद्योगाः संपूर्णाः प्रत्यक्षं दृश्यमाना अपि मोघाः स्युरित्यर्थः निर्बलानां ग्रहाणां संपूर्णा अ
पि योगाः मोघाः स्युरिति भावः परे केचन योगाः दृढगूढफलोदयाः संतः दृढगूढः आच्छन्नः फलोदयः फलप्राप्तिर्येषां तेन नाम॰
था किंवत् प्रकीर्णहुताशराशिवत् प्रकीर्णः आकीर्णः आच्छन्नश्चासौ हुताशराशिश्च तद्वत् यथा पर्णाच्छन्नो वह्निः ६६
प्रत्यक्षमदृश्यमानोपि स्वकार्यक्षमोस्त्येव तथा केचन योगा अपीत्यर्थः सबलानां ग्रहाणां अल्पयोगोपि परिपूर्णफल-

स्यात् इत्यर्थः १३ सर्वविधविचारवतो दैवज्ञस्य जगत्सु पूज्यत्वं स्यादित्याह एवेनालीयं सदैव वित्तसतां विदुषां भवनं सतां
प्राप्नोति भवनेसः कर्णपूरः तस्यभावस्तथा सतामपि वंद्यः किमुतान्येषामिति सकः य इत्युक्तप्रकारेण प्रतिकूलका
रकग्रहभावांशनिवेशदृष्टिभिः कृत्वा तन्वादिफलेषु दत्तदृक् प्रतिकूलदृशं कुर्वंति ते प्रतिकूलकारकाः ते च ते ग्रहा
श्च भावो अंशाश्च प्रतिकूलकारकग्रहभावांशास्तेषां निवेशः स्थानं तत्र दृष्टयः ताभिः तन्वादीनां फलानि तेषु दत्त
दृग्येन सतथा दुष्टकारकाये ग्रहा भावाश्च अंशाश्च तेषां यानि स्थानानि तेषु दृष्टिं दत्वा तन्वादिफलेषु च दृष्टिंद

इतीयः प्रतिकूलकारकग्रहभावांशनिवेशदृष्टिभिः तन्वादिफलेषु दत्तदृक् स प्राप्नोत्यवनं सतां
सतां १४ इति विवाहवृंदावने ग्रहयोगादिबलाबलाध्यायस्त्रयोदशः १३ अथ मिश्राध्यायः उक्ति
रव्यसामुद्रिकलक्षणानि वरः कुमारीं वृणुयान्निमित्तैः सर्वं कुमारीवरस[illegible]कीन हेयं क धारनिरधी

त्वा तद्बलाबलं विचार्य यदादिष्टं तदन्यथा न स्यादिति कृत्वा सदैव वित्सतां वंद्यः स्यादित्यर्थः १४ इति श्री [illegible]रिधीरेः १
सकलागमाचार्यवर्य श्रीकेशवसांवत्सरात्मजगणेशविरचितायां विवाहवृंदावनटीकायां विवाहदीपिकायां ग्रहयो
गादिबलाबलाध्यायस्त्रयोदशः १३ अथ स्त्रीपुंसयोः सामुद्रिकलक्षणपूर्वको मिश्राध्याय आरभ्यते तत्रादौ तत्कारणा
माह उपजातिका वरः कुमारीं वृणुयात् कैर्निमित्तैः यल्लिंगिबालकेत्यादिना वक्ष्यमाणैः किं कृत्वा सामुद्रिकलक्षणा।

निउक्तिस्य प्रकटीकृत्य समुद्रेण प्रणीतानि सामुद्रिकाणि तानि लक्षणानि सामुद्रिकलक्षणानि सामुद्रिकाणि स्त्रीपुंसयोः शुभा
शुभलक्षणानां मुख्यप्रवर्तकः समुद्र एव यथा व्याकरणस्य पाणिनिः छंदसश्च पिंगलः अतस्तानि सामुद्रिकलक्षणानीत्युच्य
ते कुमार्याः सामुद्रिकलक्षणैः प्रश्नकालेनिमित्तादिभिश्च शुभं ज्ञात्वा तां वरयेदित्यर्थः एवं वरमपि कुमारी वरयेत् वरस्यापि शु
भं ज्ञात्वा तं वरं कुमारी वृणुयादित्यर्थः एवं चेत्तर्हि प्रागुक्तेन फलसंदर्भेण किमित्याशंकायामाह उदर्क इति हि यस्मात्कारणा
दुदर्कः उत्तरकालीनं फलं धीरैर्गर्गादिभिरेकधा एकप्रकारं स्थिरं निश्चितं न निरधारि निर्धारितं भाविफलमनेनैव प्रका
रेणाऽऽयमिति न निश्चितमिति भावः १ तदेवसप्रपंचमाह इंद्रवज्रा सर्वस्वप्नादिक फलादापकमार्गः विविधो

स्वप्नो निमित्तं शकुनाः स्वकर्म शारीरमागंतुकमद्भुतानि दोषाभिचारग्रहचारकालकाम्यानि चैवं विवि

नेकप्रकारोऽस्ति स्वप्नो निद्राविशेषजं ज्ञानं ननु स्यान्निद्राशयनं स्वापः स्वप्नः संवेश इत्यभिधाने ॥ ध॰ फलाध्या॰ २
निद्रास्वप्नयोरभेदोऽस्ति सत्यं तथाप्यवांतरविशेषाद्भेदोऽस्त्येव वनगहनवत् तथा हि जागृतिस्वप्नसुषुप्तितुरीया इत्यव
स्थाचतुष्टयं योगशास्त्रे प्रसिद्धं तत्र जगतः प्रसिद्धा मनसो निरिंद्रियप्रदेशावस्थानं निद्रा सा द्विधा स्वप्नः सुषु
प्तिरिति यत्र तु दृष्टांतःकरणजं ज्ञानमस्ति सा स्वप्न इत्युच्यते यत्र तु सा तन्नास्ति सा सुषुप्तिः एतत्त्रितयं सर्वजनानुभव
सिद्धं तिसृभ्योऽपि लक्षणा सा तुरीया सा च योगिनामेव स्वप्नावस्थायां तद्गतं ज्ञानमपि स्वप्नशब्देनोपचर्यते यथा

श्रीमद्भागवते स्वप्नोनिद्रोनुगोयथेति नैषधकाव्येपि नसानिशास्वप्नगनंददर्शनमिति अनसान्नसणमाहुर्नैय्यायि
काः योगजधर्मानुगृहीतस्यमनसोनिरिंद्रियप्रदेशावस्थानंनिद्रा तत्रदुष्टांतःकरणजंज्ञानंस्वप्नइति एवमत्रस्व
प्नशब्देननिद्राविशेषजंज्ञानमुच्यते तस्मात्फलादेशः अयमेकोमार्गः निमित्तानिस्तु तदुर्वचनादीनि शकुनाः पूर्ण
कुंभादयः स्यकर्मनिजप्राचीनकर्मविपाकः शारीरंसामुद्रिकलक्षणादि आगंतुकंभविष्यत्सूचकंजातकादि अद्भु
तानि उत्पाताः दिव्यभौमांतरिक्षाः दोषावातपित्तश्लेष्मादयः स्वाभाविकाः शरीरस्यतेषामभिचारः प्रचारः स्वरविधा
नादिग्रहचारागोचरवक्रमार्गास्तोदयादयः कालःसंवत्सरमासलग्नादिः काम्यंकांक्षितं देहिकंपुरुषचेष्टादिन

प्राक्कर्मवीजंसलिलानलोर्वीसंस्कारवत्कर्मविधीयमानं शोषायपोषायचतस्यतस्मात्सदासदाचा

याच शौनकः तिथिकरणर्क्षनिशाकरविलग्नपरिकल्पनामयंगर्गः पारिग्रहरोषुफलंवदंति ॥ रवेतांनहानिः ३
यवनावसिष्ठश्चग्रहराशिगोचरभवं जातकविहितंचदेवलः प्राह शकुनकृतज्ञाः शकुनैर्निमित्तकुशलानिमित्तैश्चक
र्मसमुत्थंचान्येकुलदेशस्त्रीस्वभावमपरेतुदृष्टंत्यन्येमुनयः कालविशेषादिविशेषफलमिति सर्वस्वप्नादिःफलमार्गोनाना
विधोस्ति अतोवरवध्वोः सामुद्रिकलक्षणस्वस्थारिष्टादिकमप्यस्माभिरप्युच्यतइतिभावः तथाचाहुःजातकनिमि
त्तशुद्धांशुभलक्षणस्थितांकुलोद्भूतांवरयेत्सुतन्वींस्व्यार्थीयवीयसींकन्यकामितियवीयसींन्यूनांवयसाप्रमाणेनतस्व

